श्रीवैद्यनाथतत्सद्विरचिता

# कृष्णलीलानाटिका

सम्पादकः

डॉ० विश्वम्भरनाथ गिरिः



गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठम्

प्रयागः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्रीवैद्यनाथतत्सद्विरचिता

# ॥ कृष्णलीलानाटिका ॥

●

सम्पादकः

डॉ० विश्वम्भरनाथ गिरिः



गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्
चन्द्रशेखर-आज़ाद उद्यानम्
प्रयागः
२००२

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्रकाशक -**

*प्राचार्य*

**गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ**

चन्द्रशेखर आजाद पार्क

इलाहाबाद-२

**पुनर्मुद्रणादिकाः सर्वेऽधिकाराः संस्थानेन स्वायत्तीकृताः**

**मूल्य -**

978-93-83135-80-6

**प्रथम संस्करण - २००२**

**प्रकाशित प्रतियाँ- ५००**

**मुद्रक -**

माधव प्रिण्टर्स

वैरहना, इलाहाबाद

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

राष्ट्रिय-संस्कृत-संस्थानम्
(केन्द्रीय-शिक्षामन्त्रालयस्याङ्गभूतम्)
देहली



गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठ-ग्रन्थमाला
प्रधानसम्पादकः
डॉ० गयाचरण त्रिपाठी

षट्पञ्चाशत्तमं प्रसूनम्

❖

श्रीवैद्यनाथतत्सद्विरचिता

# ॥कृष्णलीलानाटिका॥

सम्पादकः
डॉ० विश्वम्भरनाथ गिरिः

गङ्गानाथझा-केन्द्रीय-संस्कृत-विद्यापीठम्
प्रयागः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**RASHTRIYA SANSKRIT SANSTHAN**
(Under the auspices of the Ministry of H.R.D.)
**New Delhi**

**Ganganatha Jha Kendriya Sanskrit Vidyapitha**

**TEXT SERIES**

*Chief Editor*
**Prof. G.C. Tripathi**
Principal

Vol. No. **56**

# KRSNALILĀNĀTIKĀ

**by**

**Vaidya Natha Tatsat**



*Edited by*
**Dr. Vishwambhar Nath Giri**
Reader



**Ganganatha Jha Kendriya Sanskrit Vidyapeetha**
*Chandrashekhar Azad Park*
**Allahabad**-211 002

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# *Foreword*

It is a matter of great pleasure and personal satisfaction to me that the Vidyapeetha is bringing to light a hitherto unknown dramatical work of a known author, namely the Kṛṣṇalīlā-nātikā of Vaidyanātha Tatsat. This Vaidyanātha is different from the grammerian "Vaidyanātha Pāyaguṇḍe - the pupil of Nāgeśa Bhaṭṭa. He flourished probably in the later half of the 17th century and was perhaps still active in the early years of the 18th century. He was a resident of varanasi and was the son of Rāmabhaṭṭa (father) and Dvārāka (mother). Three of his works, viz. (i) a sub commentary named ***Prabhā*** on the Pradīpa to Kāvyaprakāśa, (ii) an original commentary on the Kāvyaprakāsa named ***udāharaṇa-candrikā*** and (iii) a commentary called ***Alaṇkāra ćandrikā*** on the kuvalayānanda are already published and well known. The present work is the fourth one to see the light of the day for the first time.

The Nātikā trends the intensive attraction of śrīkṛṣṇa towards Rādhā inspite of his being married with Satyabhāmā who is at first jealous of Rādhā but later blesses the marriage between the two. The Nātikā is ***kḷptavṛtta*** (imaginative) in so far as the marriage actually takes place between Kṛiṣdṇa and Rādhā which is usually not mentioned elsewhere.

I hope that this unique piece of dramatic art shall prove to be enjoyable to the lovers of literature and thank Dr. V. N. Giri for the wonderful edition of this work and his very scholarly introduction written in chaste Sanskrit.

***Prof. G.C. Tripathi***

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# सम्पादकीयम्

श्रीकृष्णलीलानाटिकाया एका पाण्डुलिपिः (मातृका) मया गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठस्य संग्रहालयेऽधिगता। द्वितीया पुनः संस्कृत-कालेज-लाइब्रेरी-कलिकातातः प्राप्ता। तत्राद्या यथा-

१. ग्र०सं०-३५९५४, लिपिः- देवनागरी, लेखनकालः १७७१ वै० सम्वत्, लेखनस्थानम् - वाराणसी, पत्राणि-३५, पङ्क्तयः ९/८ ( प्रतिपृष्ठम् ), अक्षराणि-४५ (प्रतिपङ्क्ति)। समाप्तौ लिखितमस्ति-

''सम्पूर्णा चेयं तत्सदुपाख्यवैद्यनाथकृता श्रीकृष्णलीला नाम नाटिका संवत् १७७१ समइ नाम असार सुदीमलमास महनही छठी तादीन पुस्तक लीप्येते कासीमधे।''

२. द्वितीया यथा- ग्र० सं० २६५ ( विद्यापीठ कृता), लिपि- देवनागरी, लिपिकालः १८७९ वै० सम्वत्, लिपिकर्ता- काश्मीरो निधानपण्डितः, पृष्ठानि- १५८, पङ्क्तयः-७ ( प्रतिपृष्ठं), अक्षराणि-२८ ( प्रतिपङ्क्ति), समाप्तौ च –

''सम्पूर्णा चेयं तत्सदुपाख्यवैद्यनाथकृता श्रीकृष्णलीला नामनाटिका संवत् १८७९ कार्तिकशुक्लषष्ठयां सौम्यवासरे निधानपण्डितकाश्मीरेण लिखितं शुभंभवतु।। श्रीकृष्णाय नमः।।'

द्वेऽपीमे शुद्धप्राये प्राकृतसंवादस्थले संस्कृतच्छायारहिते च स्तः। तत्र प्रथमायाः प०सं०१ एवं ३२ चेति पत्रद्वयं नोपलभ्यते। द्वितीयामातृका पूर्णास्ति। द्वयोरपि मातृकयोः मध्ये मध्ये काश्चन पङ्क्तयो विलुप्ताः सन्ति। सौभाग्यन्त्विदं यदेकत्र यावानंशो नोपलभ्यतेऽपरत्र तावानेव सुलभ इति।

मयानयोरेव मातृकयोः साहाय्येनायं ग्रन्थः सम्पादितः। पूर्णत्वात्सुवाच्यत्वाच्छुद्धतरत्वाच्च संस्कृत-कालेज-लाइब्रेरी कलिकातातोऽधिगता मातृकाऽऽधारभूतत्वेनाङ्गीकृता। विद्यापीठीया मातृका त्वधःस्थित ''ख'' पाठत्वेन निर्दिष्टा। प्राकृतसंवादस्थले संस्कृतच्छायाकरणे निरालम्बे पथिगच्छतोऽल्पगतेर्मम स्खलनमपि सम्भाव्यते। एवमन्यत्राप्यज्ञानादल्पज्ञानाद्वा संजातास्त्रुटयो गुणलेशेऽपि पक्षपातस्वभावैः सुधीभिरुपेक्षिताः स्युरिति ममाश्वासः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मोमुद्यते मनः सचेतसां सुधीनां शयकुशेशययोः सादरमुपायनीकुर्वतो मेऽद्यावधि सकृदप्यप्रकाशितमेतं नाटिकाग्रन्थम् । विज्ञापयाम्यहमवसरेऽस्मिन् कार्तज्ञ्यं विद्यापीठीयशोधयोजानायां प्रकाशनायास्य ग्रन्थस्यानुमत्या परमोपकृतवतां तत्रभवतां भू०पू० प्राचार्यवर्याणां प्रथितपाण्डित्यानां प्रो० गयाचरणत्रिपाठिमहाशयानाम् । यथाकालं समुचितहस्तलेखादिप्रदानेन प्रकाशनानुकूलमाचरन्त उपकारकाः विद्यापीठस्य संग्रहालयपुस्तकालययोरधिकारिणः कर्मकराश्च साधुवादार्हा सन्त्यस्माकम् । महता श्रमेणाक्षरसंयोजकं श्रीविनोदकुमारद्विवेदिनं साधुवादपुरस्सरं शुभाशिषा योजयामि। इतिशम् ।

महाशिवरात्रिः
वै० सम्वत् २०५८

विदुषां विधेयः
विश्वम्भरनाथगिरिः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# प्रास्ताविकम्

अष्टादशविधेषूपरूपकेषु प्रतिनिधिभूताया नाटिकाया निर्माणे सत्कवीनां प्रवृत्तिस्तद्वशाच्च हर्षवर्द्धनमारभ्याद्यावधि विलिखितानां नाटिकाग्रन्थानां प्राचुर्येणोपलब्धिश्चास्या लोकप्रियताया हेत्वन्वेषणाय भृशं विवशीकरोति। प्रख्यातवंशोद्भवस्य नायकस्योपनिबन्धनेऽपि कविप्रतिभाप्रसूतस्योत्पाद्यकथावस्तुनः सन्निवेशः तन्माध्यमेन निखिलप्राणिष्वनुस्यूतस्य रसराजस्य शृङ्गारस्याद्भुतरसानुविद्धतया सम्यक्परिपोषस्य परमावसरः रसोचितसन्धिसन्ध्यङ्गानां घटनञ्चैतत्सर्वं यन्नाटिकाया अनितरसाधरणं वैशिष्ट्यं तदवश्यं सहृदयहृदयावर्जकमभूद्येन सुकवयोऽस्या निर्माणे प्रवृत्ता अभूवन्निति प्रतिभाति। किञ्च चतुर्ष्वङ्केष्वेकस्यैव शृङ्गारोचितसंविधानस्य संयोजनापि कवीनामाकर्षणकारणमस्ति। नाटकादौ कथावस्तुनो विस्तीर्णत्वादभीष्टस्यापि दृश्यस्य प्रदर्शने वर्ण्यस्य वर्णने च विस्तरभिया सङ्कोच आवश्यको भवति किन्तु न तथा नाटिकायाम् । धीरललितस्य नायकस्य नियमेन निबन्धनमपि नाटिकानिर्माणकृतां प्रवृत्तिप्रयोजकं प्रतीयते। यतश्च तद्वशादेव श्रृङ्गारिकामोदप्रमोदमयवातावरणसर्जने रम्यसौन्दर्यादिवर्णने च स्वतन्त्राः भवन्ति सुकवयः। तदेवं जयति नाटिकासाहित्यपरम्परा।

१६५०-१७२५ खैष्टसम्वत्सरस्य मध्ये सम्भवत्स्थितिकेन श्रीमद्वैद्यनाथ-तत्सन्महोदयेन विरचिता श्रीकृष्णलीलानाटिकापीमामेव परम्परामवलम्बते। कविरेष आत्मनो विषये नाटिकायाः प्रस्तावनायां लिखति –

"सूत्र०-आर्ये! सर्वं कथयामि। श्रूयताम् - अस्ति तावत्त्रिभुवनमहनीयमहिम्नो भगवतो विश्वेश्वराभिधानस्य शूलपाणेरायतनं वाराणसीनाम नगरी। तस्याञ्च –

जातस्तत्सदुपाख्यभूसुरकुले श्रीरामभट्टात्मजः,<br>
पातिव्रत्यपवित्रधन्यजनुषः श्रीद्वारकायाः सुतः।<br>
विद्वत्सम्मत वैद्यनाथसुकविः शब्दार्थवाक्यार्थवित् ,<br>
शृङ्गाराद्भुतनाटिकां समतनोत् श्रीकृष्णलीलाभिधाम् ।।

तां च निर्मायासौ यात्राप्रसङ्गागते मयि समुपजातप्रीतिः समर्पितवान्[1]।" इति अनेनोपन्यासेन प्रकृतनाटिकाकारः श्रीवैद्यनाथः तत्सदुपाख्ये द्विजकुले समुत्पन्न

---

१. श्रीकृष्ण० - प्रस्तावना।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

आसीत्। अस्य जनकः रामभट्टः – रामचन्द्रभट्टः जननी पतिपरायणा श्रीद्वारका चास्ताम्। मीमांसाव्याकरणयोः प्रकाण्डपण्डितः विद्वत्सु लब्धादरोऽसौ शृङ्गाराद्भुतरसोपेतां श्रीकृष्णलीलाभिधानां नाटिकामरचयत् । वाराणस्यां निवसन्नेवायमिमां नाटिकां चकार। भगवति भवे समादरस्य दर्शनात् , "वैद्यनाथ" इत्यभिधानाच्च परमवैष्णव[1]स्याप्यस्य तस्मिन्ननुरागोऽभिव्यज्यते। "रामभट्ट" इति "विट्ठल" इति च पितृपितामहयोरभिधानेन महाराष्ट्रियताप्यस्यानुमातुं शक्यते। एतच्चान्यत्र कृतोनोल्लेखेन प्रतीयते। तद्यथा-

"इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सदुपाख्य श्रीविट्ठलसूरिसूनुराम-भट्टात्मजवैद्यनाथरचितायां प्रदीपव्याख्यायां प्रभाख्यायां दशम उल्लासः।।[2]

वैद्यनाथस्य जन्मसमयः प्रसिद्धैतिह्यविदा प्रो० रामजी उपाध्यायमहोदयेन खैष्टसंवत्सरस्य सप्तदशशतकस्य चतुर्थश्चरणोऽभ्युपगतः। तन्मतेन वाराणस्यां समुत्पन्नेनानेनाष्टादशशतकस्य खैष्टसंवत्सरस्य प्रथमे चरणे नाटिकेयं विरचिता। लक्ष्मीयात्रोत्सवप्रसङ्गे (कमलायात्रोत्सवावसरे) श्रीमहाजनकदेवस्याज्ञया प्रयोग-विषयीकृताभूदेषा[3]। परन्तु महाजनकदेवस्य व्यक्तित्वं सन्दिग्धं प्रतिभाति। वैद्यनाथेनप्रस्तावनायां यस्याज्ञया नाटिकायाः प्रयोगस्य सूचना प्रदत्ता तत्र स्पष्टरूपेण महाजनकदेवस्य चर्चा नास्ति। मया नाटिकाया द्वौ हस्तलेखावधिगतौ, द्वयोरपि "महाजनकदंवेन" इत्येव स्पष्टतयोपलभ्यते। तद्यथा-

"सूत्र०- आर्ये, श्रूयताम् - अद्य खलु कमलायात्रोत्सवसमागतेन महाजनकदंवेन सबहुमानमाहूयाहमाज्ञप्तः यथा- भो सुचरितसान्द्रशृङ्गारेणाद्य दर्शनोत्सुकानि चिरस्य न चेतांसि रमणीयप्रबन्धाभिनयेनानन्दयेति[4]।"

न च वैद्यनाथेनान्यत्र महाजनकदेवस्य नाम एव गृहीतं सूचितं वा क्वचिद्येन

---

१. परमवैष्णवोऽयं वैद्यनाथ इति तु नृसिंहस्य कुलदैवतोक्त्यानुमीयते। तद्यथा-
अनेन प्रीयतां देवो नृसिंहो रमया युतः।
कुलदैवतमस्माकं सर्वभूतात्मना स्थितः।। (काव्यप्रकाश-प्रदीप-प्रभा, समाप्तौ)
एवमेव शिवे भक्तिरपि प्रभायाःसमारम्भे मङ्गलाचरणेनावगम्यते। तद्यथा-
यः सर्वदैवतगणेषु महानुपेन्द्रब्रह्मादिभिः सततपूजितपादपद्मः।
स स्वर्धुनीविमलवारितरङ्गभङ्गैरस्माकमाशु शमयत्वशुभं महेशः।।

२. काव्यप्रकाशः प्रदीप प्रभा।'

३. आधुनिकसंस्कृतनाटक, पृ० ५३७।

४. श्रीकृष्ण० - प्रस्तावना

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

राज्याश्रयदातृत्वादिनिर्णयप्रसङ्गे प्रकाशो जायेत। वस्तुतो "महाजनकदम्बेन" अयमेव समीचीनः पाठः, सहृदयानां कृते महाजनकदम्बशब्दस्य प्रयोगात् । अतएवात्रैवाग्र एतेषामेव सहृदयानां कृते नट्या "कृष्णभक्ताः" इत्यस्य प्रयोगोऽकारि-

"नटी- अहं दाव तक्केमि कन्हलीलादंसणे एदाणं उक्कंठेत्ति, जदोकन्हभत्ता एते जणस्स मुहादो सुणीअंति[1]।

(नटी- अहं तावदेवं तर्कयामि कृष्णलीलादर्शने एतेषामुत्कण्ठेति, यतो कृष्णभक्ता एते जनस्य मुखतः श्रूयन्ते)

किञ्च भरतवाक्येऽपि कविना "सहृदयहृदये" इत्येव प्रयोगः कृतः न च क्वापि महाजनकदेवस्य चर्चा विहितेति सन्देहास्पदमेवास्य व्यक्तित्वं बोध्यम् । एतेन च राज्याश्रयाभावोऽपि कवेरुक्तो ज्ञेयः।

नाटिकेयं सुकविना चरमे वयसि लिखिता मध्ये वेति तु नहि निश्चयेन वक्तुं शक्यते परन्तु यत्सत्यमिदं प्रौढपाण्डित्यमधिगत्यैवेति सूत्रधारमुखेनाविष्कृता तदीया वाचोयुक्तिरेव स्फुटीकरोति-

"यद्यस्ति रसरसायनसौहित्यौत्सुक्यतरलितं चेतः।

शृण्वन्तु तर्हि सरसाः सूक्तीः कविवैद्यनाथस्य[2]।।इति

सूत्र० - आर्ये, किमुच्यते सकलालङ्कारिकशिरोमणेरमुष्य भणितिकौशलम् । एषा खल्वस्य वाचोयुक्तिः -

सत्सम्प्रदायपरिशीलितसम्प्रभूत-

काव्यार्थतत्त्वमतिवासितमानसानाम् ।

व्युत्पत्तिनिर्मलधियां वचसां कवीनां,

सारामृतं सहृदयाः कतिचित्पिबन्ति[3]।। इति

एतेषु सन्दर्भेषु "रसरसायनसौहित्यतरलितं चेतः" इति "सकलालङ्कारिकशिरोमणेः" इति "सत्सम्प्रदायपरिशीलित" इत्यादि कथनं वस्तुतः प्रौढिं प्राप्तवत एव कवेर्वैद्यनाथस्य सम्भवतीति प्रो० रामजीउपाध्यायेन कथञ्चिदष्टादशशतकस्य खैष्टसंवत्सरस्य प्रथमचरणो

---

१. श्रीकृष्ण० - प्रस्तावना

२. श्रीकृष्ण० - प्रस्तावना पुनश्च . . . . . . . .

३. श्रीकृष्ण० - प्रस्तावना

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

नाटिकलेखनकाल इति कथनं युक्तियुक्तं प्रतिभाति। अत्रेदमवधेयम् - श्रीकृष्णलीलानाटिकाया गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठीय हस्तलेखस्य पर्यवसाने लिखितमस्ति–

**'सम्पूर्णा चेयं तत्सदुपाख्य वैद्यनाथकृता श्रीकृष्णलीलानाम नाटिका। सम्वत् १७७१ समइ नाम असार सुदी मलमास महीनही छठी तद्दीन पुस्तक लीप्येतेकासीमघे'' इति।**

एतदुल्लेखानुसारेण १७७१-५६-१७१५ खिस्ताब्दो हस्तलेखकालो भवति। यद्ययं हस्तलेखः स्वयं वैद्यनाथलिखितस्तर्हि प्रो० उपाध्यायमहोदयस्य कथनं सङ्गतमेव। परन्तु ''पदवाक्यप्रमाणपारावारीण०'' इत्यादीनामनुल्लेखः, ''समइनाम० .. ''इत्यादेर्लेखनप्रकारश्चेति वैद्यनाथस्योचितौ न प्रतिभातः। अतो यद्यत्रानाश्वासस्तर्हि १७१५ खिस्ताब्दात्प्रागेव लिखितेयं नाटिकेत्यनुमीयते। परन्तूपाध्यायमहोदयानां सप्तदशशतकस्यान्तिमे चरणेऽसौ समुत्पन्न इति मतं नाङ्गीकर्तुं शक्यते, काव्यप्रकाशोदाहरणचन्द्रिकाख्यव्याख्यानस्य समाप्तौ ग्रन्थकृता स्वयं निर्माणकालस्योट्टङ्कितत्वात् तद्यथा –

''वियद्वेदमुनिक्ष्माभिर्मितेऽब्दे कार्तिके सिते।
बुधाष्टम्यामिमं ग्रन्थं वैद्यनाथोऽभ्यपूरयत् ।। इति

श्रीमत्पदवाक्यप्रमाणाभिज्ञधर्मशास्त्रपारावारीणतत्सद्विट्ठलभट्टात्मजश्रीरामभट्टसूरिसूनुना वैद्यनाथेन काव्यप्रकाशोदाहरण विवृतावुदाहरणचन्द्रिकायां दशम उल्लासः सम्पूर्ण इति[1]।''

अनेन सन्दर्भेण स्पष्टमिदं यद् ( वियत् - ० वेद - ४ मुनि - ७ क्ष्मा–१=१७४० वै० - ५६=१६८४ खिस्ताब्दे ग्रन्थकृतोदाहरणचन्द्रिका विरचितेति। यद्युदाहरणचन्द्रिका लेखनकाले वैद्यनाथस्य वयो २५ वर्षमभ्युपगम्यते तर्हि १६५८ खैस्ताब्दः जन्मसमयः

---

१. काव्यप्रकाशबालबोधिन्यां समुद्धृतं पृ० ३२। अत्रेदं बोध्यम् - यद्यप्युपरि समुद्धृतः सन्दर्भो न मयोदाहरणचन्द्रिकायाः पर्यवसानेऽन्यत्र वा लब्धस्तथाप्यन्यस्मिन्संस्करणेऽवश्यं भवेदित्येहाङ्गीकृतः। न्यू कैटलागस् कैटलॉगारम् - भाग ४ पृ० २५२ इत्यत्र कुवलयानन्दस्य ''अलङ्कारचन्द्रिका'' नाम्नी टीकापि वैद्यनाथतत्सत्प्रणीतोल्लिखिता। अस्यापि लेखनसमयः १६८३ ए.डी. निर्दिष्टोऽस्त। किमलङ्कार चन्द्रिकोदाहरणचन्द्रिकयोरैक्यभ्रमात् पद्यमिदमुदाहरणचन्द्रिकाया इति भ्रमो जातः। परन्तु ''काव्यप्रकाशोदाहरणचन्द्रिकायां दशम उल्लासः सम्पूर्णः'' इति स्पष्टोल्लेखस्य गतिरपि चिन्तनीया स्यादेवमिति बोध्यम्। दौर्भाग्याद्बहुधा प्रकाशितापि कुवलयानन्दालङ्कारचन्द्रिका तु मया नाधिगता।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सम्भाव्यते। उदाहरणचन्द्रिका तु गोविन्दठक्कुरप्रणीतस्य काव्यप्रकाश-प्रदीपस्य "प्रभा"भिधायाः व्याख्यायाः प्रागेव तेन लिखिता, प्रथमोल्लासप्रभायां तदुल्लेखादितिज्ञेयम्। तद्यथा –

"उदाहरणश्लोकार्थस्तु विस्तरेणास्मत्कृतोदाहरणचन्द्रिकायां द्रष्टव्यः[1]।"

प्रो० एस.के.डे महाशयेनापि काव्यप्रकाशोदाहरणचन्द्रिकाया लेखनसमयस्तस्मादेवोल्लेखानुरोधात् १६८४ खैष्टसम्वत्सरोऽभ्युपगतः[2]। देवधर ऑफ्रेक्ट सम्पादिते कैटलॉगस् कैटलॉगारम्, भाग-१ पृ० ६१२ मध्ये वैद्यनाथनाम्ना १७ ग्रन्थानां सूची प्रदर्शिता, तत्रापि उदाहरणचन्द्रिकाया रचनाकालोऽयमेव निर्दिष्टोऽस्ति। तदेवं वैद्यनाथतत्सन्महोदयस्य स्थितिसमयः १६५०-१७२५ मध्ये सम्भाव्यते।

वैद्यनाथोऽयं वैद्यनाथपायगुण्डेमहोदयात् पृथगस्ति। एषः स्वग्रन्थेषु तत्र तत्रात्मनः तत्सद्वंशोद्भवत्वं प्रख्यापितवान्[3]। न च क्वापि कथमपि वा "पायगुण्डे" इत्युपाधिमपि सूचितवान्। अतएव एस०के०डे महाभागेनापि प्रकृतवैद्यनाथस्य तत्सद्वंशोद्भवत्वमेव प्रतिपादितम्[4]। तन्मतेन वैद्यनाथपायगुण्डे मैथिलो, वैयाकरणः, वेणीदेव्या माधवस्य च पुत्रः, नागेशभट्टस्य शिष्यश्चासीत् । अनेन नागोजिभट्टविरचितपरिभाषेन्दुशेखरस्य टीका व्यरचि। चन्द्रालोकस्यापि व्याख्यानमकारि। नागेभट्टस्य स्थितिसमयः १६७५-१७२५ खिस्ताब्दोऽभ्युपगम्यतेऽतो परिभाषेन्दुशेखरटीकाकर्तुः श्रीवैद्यनाथ-पायगुण्डेमहोदयस्य स्थितिकालोऽष्टादशखिस्ताब्दस्य प्रथमचरणात्पूर्वं नाङ्गीकर्तुं शक्यते। तस्माद्भिन्नकालाश्रितयोरनयोः पार्थक्यमनिर्वायम् ।

वैद्यनाथतत्सन्महाशयेन चत्वारो ग्रन्था अवश्यमेव लिखिताः – (१) काव्यप्रकाश प्रदीप- प्रभा (२) काव्यप्रकाशोदाहरणचन्द्रिका (३) कुवलयानन्दालङ्कारचन्द्रिका (४) श्रीकृष्णलीलानाटिका चेति। एषु पूर्वे त्रयो ग्रन्थाः बहुधा प्रकाशिताः प्रायेण समुपलभ्यन्ते च। चरमस्तु प्रकाश्यमान एवास्ते। सर्वत्र ग्रन्थकृत उल्लेखेनैतेषामेकर्तृत्वं सिद्धमेव।

प्रो० देवधर आफ्रेक्ट महोदयेन सम्पादिते कैटलॉगस् कैटलागारम् भाग- १ पृ० ६१२ इत्यत्र वैद्यनाथपायगुण्डे नाम्ना तद्विरचितग्रन्थानां सूचीद्वयं स्थलद्वये प्रस्तुतीकृतम्।

---

१. काव्यप्रकाश- प्रदीप- प्रभा- प्र०उ० "यः कौमारहरः" इत्यस्य व्याख्याने।

२. हिस्ट्री ऑव् संस्कृत पोइटिक्स- पृ० १७०

३. श्रीकृष्ण- प्रस्तावना।

४. हिस्ट्री ऑव् संस्कृत पोइटिक्स- पृ. १७०

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तद्यथा- विठ्ठलपौत्रस्य रामचन्द्रसूनोर्वैद्यनाथ पायगुण्डे महोदयस्य ग्रन्थानां सूची-

(१) अग्निहोत्रमन्त्रार्थचन्द्रिका (२) अलङ्कारचन्द्रिका ( कुवलयानन्दटीका) (३) कादम्बरीटीका (४) कालमाधवकारिकाटीका (५) काव्यप्रकाशोदाहरणचन्द्रिका- १६८३ई० (६) काव्यप्रंकाशप्रदीप-प्रभा (७) चतुरङ्गविनोदः (८) चन्द्रालोक टीका (९) दर्शपूर्णमासमन्त्रार्थचन्द्रिका। वैद्यनाथदर्शपूर्णमासेष्टिः (१०) न्यायविन्दुमीमांसासूत्रटीका (११) न्यायमालिकाटीका (१२) पाषण्डखण्डनम् (१३) पिष्टपशुनिर्णयः (१४) बौधायनदर्शपूर्णमास व्याख्या (१५) विषमश्लोक व्याख्या (१६) शास्त्रदीपिकाव्याख्या-प्रभा (१७) सीतारामविहारटीका।

द्वितीया यथा- वेणीदेव्या माधवदेवस्य च सुतेन वैद्यनाथपायगुण्डेमहोदयेन लिखितानां ग्रन्थानां सूची (१) अर्थसंग्रहः ( महाभाष्यप्रदीपोद्योत ( प्र०आ०) व्याख्या। (२) परिभाषेन्दुशेखरटीका - गदा / काशिका (३) परिभाषेन्दुशेखर संग्रहः (४) शक्तितरङ्गिणी (५) भूषणः (६) रप्रत्याहारखण्डनम् (७) बृद्धशब्दरत्नशेखरः ? (८) वैयाकरणसिद्धान्तमञ्जूषाटीका कला- बृहन्मञ्जूषाविवरणम् (९) शब्दकौस्तुभटीका-प्रभा (१०) लघुशब्दरत्नटीका-भाव प्रकाशः (११) लघुशब्देन्दुशेखरटीका- चिदस्थिमाला (१२) सर्वमङ्गला (१३) मिताक्षरा (व्यवहारखण्ड) टीका (१४) प्रचारस्मृति टीका (१५) भारद्वाजस्मृतिटीका।

अनयोर्याऽऽद्या सूची तत्र प्रायेण न्याय मीमांसा-धर्मशास्त्रकाव्यशास्त्रीयटीकाग्रन्थाः सन्ति। द्वितीयायां तु व्याकरणधर्मशास्त्रयोरेव व्याख्याग्रन्थाः सन्ति। तत्रापि विशेषतो नागेशग्रन्थानां व्याख्यानभूता एव। सेयं सूची वस्तुतो नागेशशिष्येण वैद्यनाथपायगुण्डे महोदयेन लिखितग्रन्थानामस्ति। येयमाद्या सा त्ववश्यमेव वैद्यनाथतत्सद्विरचितग्रन्थानामस्ति, तेषु कतिपयेषां सर्वथा प्रसिद्धत्वात। तत्सन्महोदयस्य कृते पायगुण्डे इत्युपाधि विषयेऽवश्यं भ्रान्तोऽस्ति प्रो० देवधर आफ्रेक्ट महोदयः। अनुपदं "विठ्ठलपौत्रः रामभट्टसूनुः तत्सदुपाख्यो वैद्यनाथ" इत्येवमात्मनो विषये लिखन्नपि पायगुण्डे उपाधिं विस्मृत्याप्यसूचयन् वैद्यनाथः स्वस्य पार्थक्यं प्रमाणयत्येव। चत्वारो ग्रन्था अस्यैवेत्यावेदितं प्राक् । शेषेषु कियन्तोऽस्यैव नवेति निर्धारणमन्यो विषयः परन्तु "पदवाक्यप्रमाणाभिज्ञधर्म-शास्त्रपारावारीणस्येति तत्र तत्र स्पष्टमुद्घोषयतोऽस्यैव तत्सदुपाख्यस्य वैद्यनाथस्येत्यभ्युपगम्यमानेऽप्यदोष एव।

सर्वतन्त्रस्वतन्त्रस्य वैद्यनाथस्य शास्त्रेष्वप्रतिहतागतिरासीत् । काव्यप्रकाशस्य गोविन्दठक्कुरप्रणीता प्रदीपाख्या व्याख्या नव्यन्यायशैल्यां लिखिता नितरां प्रौढास्ति। अस्यावबोधो नहि सुकरः। न च प्रदीपावबोधादृते काव्यप्रकाशार्थाधिगतिः। अतो वैद्यनाथोऽत्र

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रभाख्यां व्याख्यां चकार-

काव्यप्रकाशगम्भीरभावबोधो न चान्यतः।
इति प्रदीपगम्भीरभावार्थद्योतनं कृतम् [1]।।

नव्यन्यायशैल्यां विरचिता प्रभाप्यतीव प्रौढा व्याख्यास्ति। वैद्यनाथेन कुवलयानन्दस्यालङ्कारचन्द्रिकाव्याख्यानप्रसङ्गे अप्पयदीक्षितोपरि पण्डितराजजगन्नाथ-कृतानामाक्षेपाणां सयुक्ति निराकरणमकारि। अस्य व्याख्यानस्य महत्त्व मेतावतैव वक्तुं शक्यते यत् - रसगङ्गाधरस्य मर्मप्रकाशे नागेशेन पण्डितराजकृतानां दीक्षितविषय-काक्षेपाणां समाधानार्थं तन्मतदूषणार्थं वा वैद्यनाथतत्सत्प्रयुक्ताः युक्तय एव प्रायेणाश्रिताः। इदानीं तत्सद्वैद्यनाथो जीवित आसीत् । यद्यपि चातुर्यान्नागेशो नहि तन्नाम गृह्णाति परन्त्वेकत्र स्पष्टीभवत्येव। तद्यथा पर्यायोक्तालङ्कार निरूपणप्रसङ्गे –

"अन्वेष्टव्या इत्यन्तो ग्रन्थश्चिन्त्य इति कुवलयानन्दे ध्वनितं तट्टीकायां स्पष्टं तत एव बोध्यमिति दिक् [2]।"

कुवलयानन्दचन्द्रिकाचकोरकृता जग्गूवेङ्कटाचार्येण तु वैद्यनाथस्य तन्मतानुयायिनो नागेशस्य च विषये नातीवादरमाविष्कुर्वता भूमिकायामुक्तम् –

"कुवलयानन्दचन्द्रिकाकारो वैद्यनाथस्तु दीक्षितपक्षपातात्तदुक्तीर्भूषयितुं जगन्नाथोक्तान्दूषयति। तच्च केवलाभिनिवेशकृतमिति तल्लेखनप्रकारादेव ज्ञायते। तदुक्तिनिराकरणयुक्तिमप्रयुक्त्वैव "निरस्तम् " "तदनादरणीयम् " "अत्यन्ता-सारत्वान्नानुवादमर्हति" इत्यादिरीत्या लिखति। क्वचिदुक्ता युक्तयोऽपि न युक्ताः। क्वचिद्विप्रलम्भका अपि। नागेशभट्टस्तु रसगङ्गाधरव्याख्याने मर्मप्रकाशे चन्द्रिकोक्तान्येव दूषणान्यनुवदति, न तु स्वबुद्ध्या किमपि। तदप्यतिसंक्षिप्तमस्फुटार्थञ्च। तदेतदस्मिश्चकोरे स्पष्टम् ।" इति।

जग्गूवेङ्कटाचार्याणां दृष्टिरपि पण्डितराजपक्षपातिनी न वेति तु सुधीभिराकलनीयं परन्तु बहूनां प्रामाणिकप्रबन्धानां व्याख्यातुर्वैद्यनाथस्य संस्कृतसाहित्ये गौरवाधायकं पदमक्षुण्णमेव।

---

१. काव्यप्रकाशप्रदीप- प्रभा, समाप्तौ।

२. रसगङ्गाधरः ' पृ. ५५७ मोती० बनारसीदास- १९८३

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# श्रीकृष्णलीलानाटिका

## कथावस्तु –

### प्रथमोऽङ्कः

वृन्दावनाधीशः श्रीकृष्णः मित्रेण विजयनन्देन सह कमलायात्रोत्सवंदिदृक्षुः कमलसरः यातुं सन्नद्धोऽस्ति। असौ मित्रस्य माण्डव्यस्य ( विदूषकस्य) प्रतीक्षायामस्ति। माण्डव्यः किञ्चिद्विलम्बेन समायाति। इदानीं "स्नात्वा अचिरमेवाहमप्यागच्छामी" त्युक्त्वा गतवति विजयनन्दे, दारुकेण सज्जीकृतमपि रथं विहाय पद्भ्यामेव माण्डव्यद्वितीयो माधवः कमलसरः सम्प्राप्नोति। तत्र च जनसम्मर्दवशात् माण्डव्येन भ्रष्टोऽयं यथेच्छं विचरन् कामपि लोकोत्तरलावण्यसम्पदा तिरस्कृतनिखिलललनालोकां समानवयोरूपाभिः कन्यकाभिः परिवृतां कन्यकां पश्यति। दृष्टवेमां यावन्मूढमानस आस्ते माधवस्तावदेव शिविकामारुह्य ससखीजनायां चलितायां तस्यां तास्वेका ( राधा ताम्बूलकरङ्कवाहिनी प्रियदर्शना) प्रगल्भवाक्, व्याजात् सखीकदम्बात् निर्गत्य, तदन्तिकमुपेत्य, विज्ञाप्य कन्यायाःकुलनामनी च माधवकरकलितं कमलं तस्यै कन्यकायै प्रार्थितवती। कमलमवाप्य गतायां तस्यां माधवो मदनशरासारदीर्यमाणहृदयस्तिष्ठति। इतस्तु एनमन्वेषयन् माण्डव्यो विजयनन्दं प्राप्नोति। इदानीमुभावन्वेषयन्तौ कमलागृहेऽमुमाप्नुवतः। विजयनन्दो परिम्लानमुखं माधवं किमप्यन्तर्ध्यायन्तमिवावलोक्य वस्तुस्थितिं परिकलयन्नपि सुहृद्भावेन भूतार्थं पृच्छति। श्रीकृष्ण आदितः सर्वमाख्यात्येनम् । "अनेन वृषभानुसुता राधिकादृष्टे"ति ज्ञात्वा विजयनन्दो रहस्यमिदं स्फुटीकरोति- सन्तानार्थं चरितेन वृषभानोस्तपसा प्रसन्नया कमलयैवास्यगृहे राधारूपेणावतारो गृहीत इति। विजयनन्दो रहस्यमेतद् स्वभ्रात्रा जयदेवेन सह वृन्दावनं गतः कृष्णभक्तायाः साधुव्रताया मुखात् श्रुतवानासीत् । अत्रान्तरे माध्यन्दिनसन्ध्यासमयस्य वैतालिकेन सूचनामवाप्य सर्वे निर्गच्छन्ति।

### द्वितीयोऽङ्कः

परिव्राजिका साधुव्रता राधामाधवयोः संयोगस्य साधनार्थमुपायचिन्तने व्यग्रास्ति। इयं स्वकीयां चिन्तां शिष्यायै प्रियव्रतायै कथयति। ज्येष्ठपत्न्याः सत्यभामायाः प्रीत्या दाक्षिण्यवशात् माधवो राधां न परिणेष्यति, नापि च सापत्न्यदोषात् वृषभानुरेवैनां माधवाय दास्यतीति महान् प्रत्यूहो वर्तते। तथापि कार्यसाधनाय साऽपरां स्वशिष्यां सुमतिकामत्र व्यापृतवती। प्रियव्रता तु स्वयमेव माधवसुहृदो विजयनन्दस्य वृषभानुभ्रातृ-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पुत्रिकया चन्द्रप्रभया परिणयार्थं प्रयत्नरतास्ति इत्येवं तन्मुखात् श्रुत्वा साधुव्रता प्रसीदति। अनन्तरमुभे सम्पादनायाह्निकं निर्गच्छतः।

सुवदनासुनयने राधासख्यौ प्रविशतः। अनयोर्वार्तालापतो ज्ञायते यत् - कमलायात्रोत्सवप्रसङ्गे माधवदर्शनानन्तरं वलवदस्वस्थशरीरा राधिकेदानीं प्रियदर्शनासनाथा एकान्तं सेवते। तस्याः विरहापनोदार्थमनुरागसंवर्धनार्थं वा यतमानया सुमतिकया आदिष्टा सुनयना राधामाधवाभ्यां लिखितेनान्योन्ययोश्चित्रेण युक्तस्य चित्रफलकस्यानयोरेव दर्शनार्थं नयनानयने व्यग्रास्तीति। चन्द्रप्रभाविजयनन्दयोः प्रणयस्यापि रहस्यमिह स्फुटीभवति।

सुमतिका राधासमीपमेति। "साधुव्रता तवानामयं पृच्छति" इति तया पृष्टाया राधिकाया सखी प्रियदर्शना तदीयवेदनारहस्यमाविष्करोति। गतायां सुमतिकायां प्रियदर्शनया सख्युराश्वासनं क्रियते। "साधुव्रता तवजनकौ अकथयित्वैव सर्वं साधयिष्यति" इति सख्या समाश्वासितापि राधिका सत्यभामादिभिः सुन्दरीभिरुपास्यमानस्य माधवस्य दुर्लभत्वं मन्यमाना खिद्यते। इदानीं प्रसङ्गतः प्रियदर्शना तच्चित्रफलकं दर्शयति। तत्र स्वविषयकमाधवानुरागावेदकं लिखितं पद्यं पठित्वा सा निर्वृतिमेति। प्रियदर्शना अनयापि "कुमुदिनीरहितोऽपि० ... " इति पद्यं तत्र लेखापयति। तन्मुखात् माधवविरहवेदनां श्रुत्वा खिद्यते राधा। अत्रान्तरे सुमतिकासनाथा साधुव्रता आगच्छति। तया राधिकावृत्तान्तं पृष्टा प्रियदर्शना सर्वं खेदकारणं कथयति। माधवोऽपि तवानुरागीति समाश्वास्यैनां सुमतिकासमेता निर्गच्छति साधुव्रता।

## तृतीयोऽङ्कः

श्रीकृष्णो राधाविरहापनोदार्थं विदूषकेन सह प्रमदवनं गच्छति। पूर्वानुभूतं राधारामणीयकं स्मारं स्मारं तस्या अनुपमेयत्वं वर्णयति। विदूषकः प्रियदर्शनया प्राप्तं राधाचित्रं दर्शयति। चित्रस्य निर्माणकौशलं राधारूपञ्च पश्यन् माधवस्तल्लिखितं "कुमुदिनी रहितोऽपी"त्यादि पद्यं पठति। अत्रान्तरे तत्प्रवृत्तयुपलम्भाय चेटीमादाय सत्यभामा तत्र समायाति। विदूषकश्चित्रस्य गोपनाय यतते परन्तु चेट्या आच्छिद्य तत्तस्यै प्रदीयते। सा तद् दृष्ट्वा लिखितौ श्लोकौ पठित्वा च सपत्नीप्रेमप्रपञ्चपतितं प्रियं विज्ञाय भृशं खेदमावहन्ती परुषं वदन्ती रोषमाविष्कुर्वती चेटीमादाय निर्गच्छति। पूर्वत एव दूयमानो माधवो वल्लभां भामामपि प्रणयकुपितां कृत्वा द्विगुणितदूनमानसोऽन्तः पुरमेवेदानीं शरणं तदाराधनायेति ससखो निर्गच्छति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रियव्रता सुमतिकां साधुव्रताया सन्देशमाख्याति यत् - अद्य यदा सौभाग्यदेवतापूजार्थं सत्यभामा कमलामन्दिरं यास्यति तदा पूर्वत एव देवीपृष्ठे स्थितया त्वया सानुनासिकमसौ वक्तव्या "मदवतारभूतां राधां माधवाय प्रतिपादय" इति। मिश्रविष्कम्भकानन्तरं हृष्टा साधुव्रता प्रविशति। तस्याः युक्तिः सफला जाता। सत्यभामा राधामाधवयोः परिणयार्थं स्वीकृतिं दत्तवतीति हर्षहेतुरस्ति। इदानीमेवास्याः प्रियशिष्या प्रियव्रता अमुमेव वृत्तान्तं विजयनन्दं कथयित्वा प्रतिनिवृत्ता भवति। "विजयनन्दः प्रसन्नस्तव कार्त्तज्ञ्यमनुभवति" इत्येनां विज्ञापयति द्वेऽपि सहैवाह्निकसम्पादनाय निर्गच्छतः।

विजयनन्दस्तं वृत्तान्तं माधवमाख्यातुमन्वेषयन् प्रमदवने केलिकैलाशे माण्डव्येन सह तं पश्यंति। राधामेवानुध्यायन्तं चिन्तावशीभूतमानसं माधवं चन्द्रोपालम्भादिभिर्नितरां निर्विण्णं दृष्ट्वासौ सत्यभामया राधापरिणयस्वीकृतिप्रसङ्गं निवेदयति। श्रुत्वा माधवो नितरां प्रसीदति। सर्वे निर्गच्छन्ति, माधवोऽन्तः पुरं प्रविशति।

## चतुर्थोऽङ्कः

वृषभानोरन्तःपुरकर्मकरः कञ्चुकी दुःखितोऽस्ति। वृद्धत्वे तत्स्वामिनाऽधिगता कन्या राधा कृष्णस्यानुरागवशादिदानीं क्लिश्यतीति तस्य दुःखहेतुः। एवं विचिन्तयति एव तस्मिन् सुमतिका समायाति। सेयं साधुव्रताया आदेशात् राधिकाबाधानिवारणाय कमलापादोदकं तस्यै दातुमागता। कञ्चुकी "आहारे कुरुते" इत्यादि राधायाः दीनां दशां निवेदयति सा तु तां द्रष्टुं चित्रशालां गच्छति। तत्र गत्वा साधुव्रताया निर्देशानुसारं चन्द्रप्रभासमेतां राधामादाय सौभाग्य देवतापूजनार्थं प्रमदवनाय सर्वाभिः सह प्रस्थिता भवति।

इतस्तु कुवेरस्याज्ञया लङ्कां गत्वा परावृत्तो यक्षः आकाशमार्गात् वृन्दावनभूमिं दृष्ट्वा भगवतो गौरवादात्मानं पवित्रीकर्तुं कमलालयमवतरति। तत्र सखीभिः सह पुष्पावचये व्यग्रामेकाकिनीं सुरूपां राधां "नलकूबरस्योपायनीकर्तुं योग्येयमि"ति बुद्ध्या स्कन्धमारोप्य विमानमारुह्य गगनमुत्पतते। "हा माधव" इत्यादि तस्या विलापैः कृष्णस्यप्रेयसीति ज्ञात्वा तु सविनय मपराधक्षमापन प्रार्थनापुरस्सरमेनां कृष्णान्तिकं प्रापयितुं प्रतिनिवर्तते। अकस्मादेव सख्या अपहरणेन सर्वाः सख्यो व्याकुलाः भवन्ति। इदानीं प्रियव्रता तत्र समायाति। इयं सर्वा आदाय साधुव्रताया समीपं गच्छति। सा तु इमाः आश्वास्य माधवस्यान्तिकं गच्छति। माधवविजयनन्दावपि राधिकापहरणर्वातया दुःखमनुभवतः। साधुव्रता सर्वान् समाश्वास्याशोकतरु वेदिकायां सर्वैः सहोपस्थाय यक्षापहरणवृत्तान्तमाख्याति। अत्रान्तरे विमानमवतरति। राधामवाप्य सर्वे हृष्टाः भवन्ति। यक्षस्यभक्त्या प्रीतो माधवः कुबेरायास्य निरपराधत्वविषये विलिख्य पत्रं ददाति। यक्षो गच्छति। साधुव्रताया आदेशात् सौभाग्यदेवतापूजार्थं सखीभिः सह राधिकाचन्द्रप्रभे

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पूजाया दर्शनार्थं माधवविजयनन्दौ च सर्वे कमलालयं गच्छन्ति। तत्र सर्वे पूजोत्सवमनुभवन्ति। इदानीमेव विदूषक आगत्य निवेदयति सत्यभामा राधामाधवयोः परिणयाय वृषभानोरन्तिकं दूतं प्रेषितवतीति भवद्भिः सज्जीभवितव्यमिति। साधुव्रता चन्द्रप्रभाविज्यनन्दयोरपि परिणयस्य रहस्यं प्रकाशयति। अत्रान्तरे कञ्चुकिनोऽद्यैव विवाहमुहूर्तोऽस्ति" इति सन्देशात् सर्वे प्रसन्ना निर्गच्छन्ति।

विवाहोत्सवः सम्पद्यते। इदानीं संयुक्तौ स्तः राधामाधवौ। केलिगृहेऽधितल्पं शयानां लोकोत्तररमणीयां प्रियां दर्शं दर्शं तत्तद्भावभरितो माधवो वैतालिकवचसा प्रातः कालं विज्ञायोत्तिष्ठति। प्रियार्थै कमल पुष्पस्योपहारप्रदानार्थं तदानयनाय प्रमदवनं गच्छति। तत्र कमलालयस्य प्राभातिकं रामणीयकं प्रियामपि दर्शनाय तामानेतुं प्रतिनिवर्तते। अत्र तु तां किञ्चिदुद्विंग्नां पश्यति। आलीभिः श्लेषोक्त्या वंशीविषयकं मत्प्रणयमाश्रित्य वञ्चिता मे प्रियेति तद्वचनादेव ज्ञात्वाऽसा वस्याः सन्देहं दूरीकर्तुं वंशी वादयति। राधा प्रसीदति। एनामादाय प्रमदवनं गत्वा माधवो वनस्य रामणीयकं दर्शयति। इहैव प्रियव्रतासुमतिकाम्यां सह साधुव्रता आगच्छति। चन्द्रप्रभाविजयनन्दावपि चागच्छतः। साधुव्रता राधां प्रति माधवं सविशेषमादरं याचते। कृष्णः प्रतिजानाति। भरतवाक्येन सह नाटिका समाप्यते।

नाट्यविद्भिः नाटिकाया वृत्तं कल्पितमङ्गीकृतम्। अत्र स्त्रीपात्राणां प्राचुर्यं, चत्वारोऽङ्का धीरललितः कलोपासकः कश्चिद् राजा नायकत्वेनोपनिबध्यते[1]। श्रीकृष्णलीलानाटिकायाः कथावस्तु सर्वथोत्पाद्यमस्ति। श्रीकृष्णकथाश्रयीभूतश्रीमद्भागवतब्रह्माण्डपुराणादौ नहि राज्ञः श्रीकृष्णस्य ज्येष्ठानायिकासत्यभामायाः भीतस्य राधया प्रणयः परिणयश्च वर्णितौ स्तः। अत्र तु वृन्दावनाधीशोऽसौ स्वस्यैव सामन्तस्य वृषभानो र्दुहित्र्या राधिकया परिणयं करोति। जयदेवोऽत्र सम्भवतः गीतगोविन्दकारः कृष्णभक्तः साधुव्रताशिष्यत्वेन वर्णितः। तदनुजो विजयनन्दश्च श्रीकृष्णमित्रत्वेन पताकानायकरूपेण प्रदर्शितः। चन्द्रप्रभायाः राधिकासख्याः प्रणयी परिणयकर्ता चावलोक्यते। नाटिकायां षट् पुरुष पात्राणि एकादशस्त्रीपात्राणि चत्वारोऽङ्काश्चापि नाट्यविदां सम्मततयैव निबद्धाः सन्ति। नायकस्तु स्वयं वृन्दावनाधीशः प्रख्यातो यदुकुलनन्दनः नन्दनन्दनः निश्चिन्तः कलासक्तः मृदुस्वभावः सुखी श्रीकृष्ण एव।

नाटिकायां नायिका राजवंशोद्भवा प्रायेणान्तः पुरसम्बद्धा सङ्गीतादिसम्बद्धा वा

---

१. नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका।
ख्यातो धीरललितस्तत्रस्यान्नायको नृपः।। ( सा० द० ६/२६९)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कन्या भवेत्, याभिनवानुरागपरिचिततयोपनिबध्यते[1]। सेयं राधिका राज्ञः वृषभानोः कन्यास्ति, कमलायात्रोत्सवप्रसङ्गे श्रीकृष्णादर्शनवशात् संजातानुरागाभूत् । नायकोऽस्यामनुरक्तोऽपि दक्षिणस्वभाववशात् भीतः सन्नेव प्रवर्तते। ज्येष्ठा सत्यभामा सान्तरायभूताऽनयोः समागमेऽवतिष्ठते। यदा सा प्रसन्ना भवति तदैव सङ्गमो जायते[2]। श्रीकृष्णस्य पट्टमहिषी प्रकृत्या भामा सत्यभामा प्रकृतनायिकायाः राधिकायाः नायकेन समागमे बाधाभूतास्ति। साधुव्रता सौभाग्यदेवतार्चनकालिकलक्ष्म्यादेशरूपया युक्त्या राधामाधवयोः परिणयार्थमेनां प्रसादयति। अस्मिन्प्रसङ्गे मानमपि प्रगल्भायाः सत्यभामायाः द्रष्टव्यमस्ति या कृतापराधिनं पादपतितमपि प्रियमुपेक्ष्य गच्छति, न कौटिल्यादृते राधामाधवयोः परियणार्थमनुमतिञ्च प्रयच्छति। नृत्यगीतादिप्रधाना कैशिकीवृत्तिः सर्वत्र द्रष्टुं शक्यते। गर्भतोऽधिक उद्भिन्नो मुख्यो राधामाधवयोः परिणयात्मकफलस्योपायभूतोऽनयोरनुरागः सत्यभामायाः मानात् यक्षेन राधिकापहरणाच्च सान्तरायोऽपि अल्पावधिक एव प्रदर्शित इह, स च विमर्शसन्धेः प्रयोजकः। अन्येषां च सन्ध्यङ्गादीनां सम्यग्रसानुकूलसन्निवेशोऽपि द्रष्टुं शक्यत एव। तदेवं सर्वथा नाटिकालक्षणोपेतमिदमुत्तमं दृश्यकाव्यमिति नास्ति संशीतिलेशोऽपि।

काव्यसौन्दर्यदृष्ट्या भावपक्षस्य कलाक्षस्य च द्वयोरपि सम्यकपरिपोषोऽत्रास्ति। शृङ्गाररसप्रधानायां नाटिकायामिह शृङ्गारस्य द्वयोरपि संयोगविप्रयोगपक्षयोः रम्यं रूपमनुपदमवलोक्यते। राधामाधवयोः पूर्वानुरागवर्णनाप्रसङ्गेषु माधवस्य राधायाश्चावस्थाभिव्यञ्जकाभि रुक्तिभिर्व्यवहारैश्च तत्र तत्र शृङ्गारस्य वियोग पक्षः प्रायेणातीव रमणीयतया प्रस्तुतीकृतः कविना। तद्यथा राधादर्शनोत्कण्ठितस्य तामेवानुध्यायतो माधवस्यावस्थां वर्णयतो विजयनन्दस्योक्तिः –

प्रसादो नैवास्ये विलसति यथापूर्वमधुना,
निरालम्बा दृष्टिः श्वसितमतिदीर्घं मुहुरिदम् ।

---

१. स्यादन्तःपुरसम्बद्धा सङ्गीतव्यापृताथवा।
नवानुरागा कन्यात्र नायिका नृपवंशजा।। (सा०द० ६/२७०)

२. सम्प्रवर्तेत नेतास्यां देव्यास्त्रासेन शङ्कितः।
देवीभवेत्पुनर्ज्येष्ठा प्रगल्भानृपवंशजा।।
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः।
वृत्तिः स्यात्कैशिकी स्वल्पविमर्शाः सन्धयः पुनः।। ( सा०द०२७१-७२)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

किमेतत् किंवान्यत्प्रचुरमदनव्याधिनिलयो,

वयो हेतुव्याजादपि मनसि मोहं वितनुते[1]।।

एवमेव चतुर्थेऽङ्के आरम्भ एव माधवदर्शनान्तरं पञ्चेषुणा लक्ष्यतां नीतायाः राधाया दुरवस्थां वर्णयतः कञ्चुकिन उक्तावपि विप्रलम्भस्य चित्रणं यथा-

आहारे कुरुते मनागपि मनो नालीगणैः प्रार्थिता-

प्याचष्टे कथमप्यहो न बहुशः पृष्टापि हृद्वेदनाम् ।

दीर्घोच्छ्वासपरम्पराभिरभितः सन्तापयन्ती मुहुः

सन्तप्तं परमाधिना निजजनं शून्येक्षणं ध्यायति[2]।।

संयोगश्रङ्गारस्य प्रसङ्गार्थन्तु परिणयानन्तरं सुखं निवसतोरेव वासकगृहे तल्पगतां सुप्तां राधिकामवलोक्य तत्तच्छृङ्गारिकभावैर्भरितस्य माधवस्यैव वचनमिहो पन्यस्यते-

वामेतरकराकृष्टवसनाञ्चलमुद्रितम् ।

स्मितं स्मेरकपोलाक्ष्याः स्मरस्येव रणायनम् [3]।।

अपि च -

नवदयितसमागमे सखीभिः,

कथमपि केलिगृहं निवेशितायाः।

सकुतुकरभसोपगूहनादौ,

जयति नकारपरम्परा मृगाक्ष्याः[4]।।

अभिव्यक्ताया देवादिविषयिण्याः रतेर्भावत्वमङ्गीक्रियते[5]। प्रकृतनाटिका भगवतः श्रीकृष्णस्य हृद्यां लीलां प्रस्तौति। तत्र भगवति परमश्रद्धावान् सुकविर्यथावसरं तद्विषयिणीं रतिमाविष्कर्तुं न मनागपि सङ्कोचमञ्चति। नान्दीप्रसङ्गे, वृन्दावनभूमौ यक्षावतरण प्रसङ्गे च

---

१. श्रीकृष्ण- १/१९

२. श्रीकृष्ण ४/४

३. श्रीकृष्ण० ४/२५

४. श्रीकृष्ण० ४/२६

५. "रतिर्देवादिविषया व्यभिचारीतथाञ्जितः भावः प्रोक्तः (का०प्र० ४/३५)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विशेषरूपेण कविनिष्ठभगवद्विषयिणी रतिः परिपोषमुपनीता। तद्यथा नान्दीपद्यम् –

वृन्दारण्यगतोऽपि यः सुमनसां चित्ते समुद्भासते,
भूमिष्ठोऽपि तदीयभारशमनः श्यामोऽपि पीतो जनैः।
आश्लिष्टो वनमालयाप्यवनतां विभ्रद्दवाब्धश्रम-
च्छेदी कोऽपि तमाल एष भवतां भव्याय भूयाच्चिरम्[1] ।।

यक्षोक्तिर्यथा-

भाराक्रान्तवसुन्धराकरुणया धात्रा सुराणां गणैः,
सार्द्धं क्षीरनिधेस्तटं प्रतिगतेनाभ्यर्थितः स्वां तनुम् ।
यस्तत्कार्यचिकीर्षया यदुकुले देव्यामवातीतरद् ,
देवक्यां जगदुत्सवैकनिधये कृष्णाय तस्यै नमः[2]।।

शृङ्गारसप्रधानायां नाटिकायामिह यद्यपि रसान्तरपरिपोषस्य न तथावसरस्तथापि विदूषवेन सह वार्तालाप प्रसङ्गे मर्यादितहास्यस्य, यक्षकृतराधिकापहरणवृत्तान्तश्रवणकालिकश्रीकृष्णोक्त्यादिषु करुणस्य च वातावरणं द्रष्टुं शक्यते। करुणो रसस्तत्रेति तु न वक्तव्यं ताटस्थ्याभावात् ।

कलापक्षदृष्टया नाटिकायामिह रसाक्षेपका अपृथग्यत्ननिर्वत्याः रम्याः शब्दार्थालङ्काराः सुप्रयुक्ताः सन्ति। सुललितवर्णविन्यासा अनुपदं सुप्रयुक्ता अनुप्रासच्छटा क्वाचित्केन यमकस्य श्लेषस्य च समुचित प्रयोगश्च सहृदयहृदयावर्जका एव सन्ति। तद्यथा यमकानुप्रासयोः-

वसुधा वसुधान्यधन्यरूपाभवदाकाशमपीन्द्रनीलनीलम् ।
सलिलं जलजालिमञ्जु जातीकुसुमामोदसमीरणः समीरः[3]।।

"वसुधा वसुधा" "नील नील" "समीर समीर" इति स्वरव्यञ्जनसमुदाययोर्यमनाद्यमकस्य, धान्यधन्ययोर्धकार नकारयकाराणां "जलजालि" इत्यत्र जकारलकारयोः कुसुमामोद इत्यत्र मकारस्य चैतेषामनेकानेकव्यञ्जनानां

---

१. श्रीकृष्ण० १/३
२. श्रीकृष्ण० ४/११
३. श्रीकृष्ण० १/१२

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सकृदावृत्त्यानुप्रासालङ्कारस्य सन्निवेशो नितरामाकर्षकः सचेतसाम् । श्लेषस्य प्रयोगो नहि भूयसास्ति परन्तु यत्रास्ति तत्रौचित्यानुसार्येव। चतुर्थेऽङ्के "मुरलीमधिकं मनुते कृष्णो न त्वामि"ति शिलष्टैरालीनां वचनैः वञ्चिततयेर्ष्याकषायिताया राधाया अनुवादोक्तिर्यथा-

सद्वृत्तताविरहितां कठिनां तथान्तः
शून्यामतीवमुखरामपि भूरिरन्ध्रीम् ।
रूपेण नीरसतरेण च दारुणाद्यां,
कृष्णः प्रियां भजति काञ्चिदसौ निगूढम् [१]।।

अत्र "सद्वृत्तताविरहितां" इत्यादि पदानि कांचित् प्रियां" "मुरलीं" प्रति च विशेषणीभवन्ति, येन च कृष्णस्यापरानुरक्तता मुरल्यनुरक्तता चोभयं प्रतीयते।

अर्थालङ्कारेषु उपमारूपकोत्प्रेक्षासन्देहापह्नुत्यतिशयोक्ति विरोधाभासमुख्यानामलङ्काराणां यथावसरं नैसर्गिकरीत्या प्रयोगः कृतोऽस्ति। अलङ्काराणामभिधानप्रकाररूपत्वाद्वस्तुंत इमे स्वतः समायाता सन्तीति वक्तव्यम् । अतएवैतेषां प्रयोगेण भाषाप्रवाहो न जातुचिदवरुध्यते, नाप्यर्थबोधे रसाक्षेपे वा कापि बाधा समनुभूयते। शरद्वर्णने शरदा प्रसाधिता जगती सैरन्ध्रीव प्रतिभाति। अत्र साङ्गरूपकस्य रम्यं रूपं प्रस्तौति-

द्यौर्मूर्धा विमलो रवीन्दुनयनद्वन्द्वः स्फुरत्तारका-
पुष्पालङ्कृत पुष्करालकचयप्राप्ताभिरामच्छविः।
प्रायेचाचलदक्षिणाद्रियुगलं तुङ्गस्तनौ, वारिधि-
स्फूर्जन्मेखलवर्षसङ्गजघनं श्रीशम्भुशक्तेः स्फुटम् [२]।।

उपमायथा-

चन्द्रिकेव चमत्कारं चक्षुषोर्मम तन्वती।
लावण्यरसवापीव कापीयमभिलक्ष्यते[३]।।

विरोधाभासस्य यथा–

---

१. श्रीकृष्ण ४/३१

२. श्रीकृष्ण० १/१४

३. श्रीकृष्ण० १/१२

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

वृन्दारण्यगतोऽपि यः सुमनसां चित्ते समुद्भासते,

भूमिष्ठोऽपि तदीयभारशमनः श्यामोऽपि पीतो जनैः।

आश्लिष्टो वनमालयाप्यवनतां विभ्रद्भवाब्धश्रम-

च्छेदी कोऽपि तमाल एष भवतां भव्याय भूयाच्चिरम् [१]।।

प्रकृतस्य वर्ण्यस्य श्रीकृष्णस्यैव तमालत्वेनाध्यवसिततया वर्णनेनातिशयोक्तिरपि द्रष्टव्यैवात्र। अपह्नुतिर्यथा-

केचिद्बिम्बमितीरयन्ति कवयः शोणं मणिं केचन,

प्रालेयद्युतिषोडशांशमरुणं प्राहुः परे पण्डिताः।

कान्ताया अधरं वयं तु मधुरं जानीमहे कन्दलम् ।

शृङ्गाररस्य तरोः स्मरानुगतया रत्या रसेनोक्षितम् [२]।।

अत्र कान्तायाअधरे वर्ण्येऽवर्ण्यानां विम्बत्वमणित्वादीनां निषेधपूर्वकं कन्दलत्वादिसाधनादपह्नुत्यलङ्कारः[३]।

माधुर्यगुणोत्कर्षस्य नाटिकायां साम्राज्यमस्ति तथापि प्रसादमयत्वाव्यभिचारित्वेनैव। क्वचित्क्वचिदोजोगुणस्यापि दर्शनं जायते तदपि औचित्यानुसार्येव। वैदर्भीरीतिः सर्वत्रास्ति क्वाचित्केन तु समासबहुला गौडीरीतिरपि विजृम्भते। वस्तुतः सहजा सरला सरसा च कविता कवेरभिप्रेतास्ति अतएवासौ कुतर्कार्ककरामर्शं काव्ये कथमपि न सहते। तद्यथा-

मालतीकुसुमस्येव सौकुमार्यं कवेर्गिराम् ।

कुतर्कार्ककरामर्शं न जातु सहते क्वचित् [४]।।

पात्राणां चरित्रचित्रणे तु नितरां पटुरस्ति वैद्यनाथः। श्रीकृष्णस्य सत्यभामायाः श्रीराधायाः साधुव्रतायाः विदूषकस्य राधा सखीनां च किं बहुना प्रतिपात्रं तेषां चरित्रचित्रणे नितरां समर्थोऽवलोक्यतेऽसौ। वस्तुसंविधानं रसाभिव्यक्त्यपेक्षया सन्धिसन्ध्यङ्ग घटनं, प्रभावशालितया चमत्कारिसंवादरचनञ्चैतत्सर्वं कवेः नाट्यकौशलं प्रतिपादयितुमलं बोध्यम्। अतएव कविनात्मनो नाट्यकौशलविषये सूत्रधारमुखेन प्रस्तुतीकृताः वाचोयुक्तयो नातिशयोक्तिमाश्रयन्ते। तद्यथा-

---

१. श्रीकृष्ण० १/३

२. श्रीकृष्ण० ३/९

३. प्रकृतं यन्निषिध्यान्साध्यते सात्वपह्नुतिः। (का०प्र० १०/९६)

४. श्रीकृष्ण० १/९

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यद्यस्ति रसरसायनसौहित्यौत्सुक्यतरलितं चेतः।
श्रृण्वन्तु तर्हि सरसाः सूक्तीः कविवैद्यनाथस्य[1]।।

जनकदम्बेन नाट्योपस्थापनार्थं प्रार्थितः सूत्रधारो वस्तुतो यादृङ्नाट्यवस्तुविचिन्तने व्यग्र आसीत्तदेव तेन लभ्यते। तस्याभिप्रेत नाट्यं त्वासीत् -

गीतं वा यदि वापि वस्तु वहुशो रंगे यदाविष्कृतं,
तच्चित्ते न चमत्करोति विदुषां जेगीयमानं नटैः।
यत्स्यादश्रुतपूर्वमद्भुतकथाचातुर्यधुर्यं कवेः,
काव्यं सान्द्ररसानुसारसरसं तच्चिन्तयामि ध्रुवम् [2]।।

वर्ण्यविषयस्य रम्यप्रस्तुतौ परमं प्रावीण्यं धत्ते वैद्यनाथः। यद्यपि नाट्ये श्रव्यकाव्यमिव प्रकृतिचित्रणस्य वस्तुवर्णनस्य वा नावसरः, नाट्यानामतिसुकुमारत्वाद्रसोच्छेदप्रसङ्गभयात् तथापि तत्र तत्र शरदर्तोः सन्ध्यायाश्चन्द्रोदयस्यान्धकारस्य प्राभातिकसमयस्य कमलालयादेश्च प्रसंगे कवेर्वर्णनाचातुरी, वाग्वैभवं, वैदग्ध्यं च सर्वथा स्फुटीभवन्ति। सन्ध्यासमयेऽस्तशिखरं प्रस्थिते रवौ शनैः शनैरन्धकारस्यावतरणं तत्कर्तृकसंसारव्यापनञ्च वर्णयति कविः -

आदौ रासभरोमराजिरुचिरच्छायं ततो धूमिका-
तुल्यायं तदनु स्फुरत्करिघटासंघट्टदृष्टोपमम् ।
पश्चादञ्जनपुञ्जमञ्जुरभसादद्वैतमुद्भावयन् ,
मुष्टिग्राह्यमहो महोन्नतमिदं ध्वान्तं समुज्जृम्भते[3]।

चन्द्रमस उद्गमनक्रमं वर्णयन् वैद्यनाथो विविधरूपेणोल्लिखत्यंनम् -

सिन्दूरामलविन्दुरिन्दुरुदयन्निद्राङ्गनाया दिशो,
भालेऽभादथ तच्छिरस्ययमहो जाम्बूनदालङ्कृतिः।
जातीगुच्छ इवाथ केशनिचये तस्या इदानीं पुनः,
स्वच्छादर्श इवामुपाकरधृतो देदीप्यते सर्वतः[4]।।

उदयन्निन्दुः निद्राङ्गनाया दिशो भाले सिन्दूरामलविन्दुः, तच्छिरसि स्वर्णनिर्मिताऽलंकृतिः,

---

१. श्रीकृष्ण० १/९
२. श्रीकृष्ण० १/७
३. श्रीकृष्णं० ३/१४
४. श्रीकृष्ण० ३/१९

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

केशनिचये जातीगुच्छ इव शृङ्गारार्थं सहायभूतो हस्तगृहीत आदर्श इव च प्रतिभाति। कवेर्वैद्यनाथस्य कवितासु क्वचित्क्वचित्प्रसिद्ध कविपद्यानां भावस्यप्रभावोऽपि परिलक्ष्यते। इह द्वित्राण्युदाह्रियन्ते-

कुमुदिनीरहितोऽपि कलानिधिः,
किरतु काममसौ किल चन्द्रिकाम् ।
कुमुदिनी तु न तेन विनेक्षणं,
क्षणमपीदमुदञ्चयितुं क्षमा[1]।।

अत्र शाकुन्तलीयस्य पद्यस्य-

अयं जनस्तिष्ठति सङ्गमोत्सुको,
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं,
श्रिया दुरापः कथमीप्सितो जनः[2]।।

एवमेव-

सा तु प्रिया न सुलभा हृदयन्तु तस्या-
मासक्तमेतदविचारपरं परन्तु।
लब्ध्वावकाश इव मन्मथ एष पाप-
श्चापं समानयति कर्णतटोपकण्ठम् [3]।।

अत्रापि शाकुन्तलस्यैव-

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते[4]।।

नाटिकायामिह यत्र तत्र लोकपरम्पराया अपि समुल्लेखोऽस्ति। कमलायात्रोत्सव-वर्णनप्रसङ्गे विविधवस्त्रालङ्कारैः सत्कृताङ्गलतिकानां नागरनारीणा मन्योन्यहस्तग्रहणपुरस्सरं

---

१. श्रीकृष्ण० २/५
२. अभि० शा० ३/११
३. श्रीकृष्ण० ३/५
४. अभि०शा० २/१

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मण्डलं विधाय भ्रामं भ्रामं सामोदं सरसगीतगानवर्णनं यथा-

अन्योन्यपाणिकमलग्रथनैर्विलासा-
दारच्यमण्डलतया भ्रमणातिरेकम् ।
गीतामृतैर्विलसितैर्ललितालकान्त-
मातन्वते खेलनमम्बुजाक्ष्यः[१]।।

इदानीमपि भाद्रपदमासे मीरजापुरवाराणसीक्षेत्रे तत् समीपवर्तिनि पूर्वाञ्चले च सेयं परम्परा कज्जलीप्रमुखलोकगीतगान प्रसङ्गे प्रचलितास्ति। तदेवं श्रीकृष्णलीलानाटिकाया यत्किञ्चिद्वैशिष्टयमुक्तम् । नाट्यकलायाः काव्यसौन्दर्यस्य चापूर्वं सामञ्जस्यमिहावलोक्यते। कथं न भवेन्नाम यदा कविवैद्यनाथस्य कवित्वविषयिणी दृष्टिरेव रसाभिमुखी स्यात् । रसानुकूलत्वेन शब्दार्थयोर्गुम्फनमेव वाग्विदग्धस्य कवेः कर्म काव्यमिति तदीयोऽभिप्रायः प्रियतमामनुध्यायतो मन्दमन्दं विचरतो नायकस्य माधवस्य विलक्षणां स्थितिं वर्णयतस्तंच्छुहृदो विजयनन्दस्योक्तौ सुतरामभिव्यज्यते-

अन्तर्गतरसाकूतमनोहरपदक्रमा।
विदग्धकवितेवास्य मतिरन्यैव दृश्यते[२]।।

डॉ० विश्वम्भरनाथ गिरिः

---

१. श्रीकृष्ण० १/१७
२. श्रीकृष्ण० १/१८

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# पात्राणि

## पुरुषाः

| | | |
|---|---|---|
| सूत्रधारः | – | नाटिकाप्रबन्धकः |
| माधवः | – | यदुकुलतिलको राजा नायकश्च |
| विजयनन्दनः | – | श्रीकृष्ण सुहृद् जयदेवानुजः |
| माण्डव्यः | – | विदूषकः श्रीकृष्णस्य नर्मसचिवः |
| विनतकन्धरः | – | कञ्चुकी |
| यक्षः | – | किन्नरेशकुवेरस्य सेवकः |

## स्त्रियः

| | | |
|---|---|---|
| नटी | – | सूत्रधारसहायिका |
| राधिका | – | वृषभानुजा नायिका चास्या नाटिकायाः |
| साधुव्रता | – | विष्णुभक्ता तापसी, राधमाधव-योगकारिणी |
| प्रियदर्शना | – | राधाप्रसादपात्रं ताम्बूल-करङ्कवाहिनी |
| सुवदना | – | राधासखी |
| सुनयना | – | राधासखी |
| चेटी | – | दासी (सम्भवतः प्रतीहारी) |
| सुमतिका | – | साधुव्रताशिष्या |
| सत्यभामा | – | श्रीकृष्णपत्नी, प्रतिनायिका |
| चन्द्रप्रभा | – | वृषभानोरनुजस्य कन्या, प्रेयसी च विजयनन्दस्य |
| प्रियव्रता | – | साधुव्रताशिष्या |

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

।। श्रीः।।

# (कविप्रवरश्रीवैद्यनाथतत्सद्विरचिता)

## श्रीकृष्णलीलानाटिका

## (प्रथमोऽङ्कः)

### नान्दी

[१] विविध भूमिकया विवुधोत्सवं,
समतनोद्य इहाद्भुतलीलया।
कलितपीतपटः कुतुकीनटः,
स सुखमातनुतां भवतां हरिः।।१।।

अपिच-

अन्तः सन्तमसापसारणकरः संस्मर्यमाणः सतां,
भास्वद्भासुरतारकापरिवृतः कृष्णं श्रितोऽप्यक्षयः।
लावण्याद्भुतचन्द्रिकाद्रुतवलत्संसारवारांनिधिः,
श्रीकृष्णाननचन्द्र एष भवतां मोदं तनोत्वद्भुतः।।२।।

अपिच-

वृन्दारण्यगतोऽपि यः सुमनसां चित्ते समुद्भासते,
भूमिष्ठोऽपि तदीयभारशमनः श्यामोऽपि पीतो जनैः।
आश्लिष्टो वनमालयाप्यवनतां विभ्रद्भवाब्धश्रम-,
च्छेदी कोऽपि तमाल एष भवतां भव्याय भूयाच्चिरम्।।३।।

किञ्च -

गा वनान्तमनुचारयन् शनै-
र्मञ्जु वेणुमनुनादयन् रसात्।

---

१. ख–मातृकायाः प्रथमपृष्ठं नोपलभ्यतेऽतः "विविधे" त्यारम्य "चिरस्य नश्चेतांसि रमणी (य)" इति यावद्ग्रन्थः कमातृकानुसार्येव बोध्यः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भानुजातनुतरङ्गमालया-,
कृष्टदृष्टिकमलोऽवताद्धरिः ।।४।।

[नान्द्यन्ते]

**सूत्रधारः -**

अलमतिविस्तरेण। अहो, महीयानुपनतो मे कार्यभारः। तत् क्व नु खलु सहधर्मचारिणीमालोकयामि (नेपथ्याभिमुख मवलोक्य) आर्ये, द्रुततरमागम्यताम्।

**नटी-**

(सत्वरमुपसृत्य) आणवेदु अज्जो। अपुव्वो वखु अज्ज अज्जउत्तस्य आवेओ लक्खी अदि।(आज्ञापयत्वार्यः। अपूर्वः खल्वद्यार्यपुत्रस्य आवेगो लक्ष्यते)

**सूत्र० -**

आर्ये, श्रूयताम्- अद्य खलु कमलालययात्रा महोत्सवागतेन सहृदयगोष्ठीगरिष्ठेन महाजनकदम्बेन सबहुमानमाहूयाहमाज्ञप्तो यथा-"भो सुचरितसान्द्रश्रृंगारेणाद्य दर्शनोत्सुकानि चिरस्य नः चेतांसि रमणीय प्रबन्धाभिनयेनानन्दयेति। अतस्तत्सम्पादन समुत्सुको भवतीं त्वरयामि।

**पश्य -**

किन्तस्याध्ययनेन सद्गुरुकृपालब्धेन दैवोदया-,
दाराद्धाः सुहृदो न येन सुजना विद्वन्मनोरञ्जनाः।
पूर्णस्यापि पयोनिधेर्जलधरैरापीयमानैर्जलैः,
सार्थक्येन विना किमस्ति भुवने कार्यं प्रवादोचितम्।।५।।

**नटी -**

एव्वं णेदं जह अज्जउत्तो भणादि। ता कहेदु अज्जो अहिणेदव्वस्स पवंधस्स णामहेअं (एवं न्विदं यथार्यपुत्रो भणति। तत् कथयत्वार्यः अभिनेतव्यस्य प्रबन्धस्य नामधेयम्)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सूत्र०** -

तमेव चिन्तयामि (इति चिन्तां नाटयति)

**नटी** - (सस्मितम)

**सिरिकालिदासपमुहा [1]कइनो बहुसुत्तिमो[2]त्तिअकलावा।**
**किअणाणाविहकव्वा वि सुमरिदा अज्जउत्तेण।।६।।**
**(श्रीकालिदासप्रमुखैः कविभिः बहुसूक्तिमौक्तिककलापाः।**
**कृतनानाविधकाव्या अपि स्मृता आर्यपुत्रेण।।६।।**

**सूत्र०** -

आर्ये ! असकृत् कृतप्रयोगाः प्राचीनप्रबन्धाः कथं न स्मर्यन्ते, तथापि तु-

**गीतं वा यदि वापि वस्तु बहुशो रंगे यदाविष्कृतं,**
**तच्चित्ते न चमत्करोति विदुषां जेगीयमानं नटैः।**
**यत्स्यादश्रुतपूर्वमद्भुतकथाचातुर्यधुर्यं कवेः,**
**काव्यं सान्द्ररसानुसारसरसं तच्चिन्तयामि स्थितः।।७।।**

**नटी** -

अहं दाव एव्वं तक्केमि कन्हलीलादंसणे एदाणं उक्कंठेत्ति, जदो कन्हभत्ता एदे जणस्स मुहादो[3] सुणीअंति

(अहं तावदेवं तर्कयामि कृष्णलीलादर्शने एतेषामुत्क ण्ठेति, यतः कृष्णभक्ता एते जनस्य मुखतः श्रूयन्ते।)

**सूत्र०** -

(स्मृतिमभिनीय, सोल्लासम्) आर्ये अनेन त्वद्वचनोपन्यासेन स्मृतिमारूढो

---

१. ख– "क" इति नास्ति।
२. ख– "मेत्ति" इति नास्ति।
२. ख–समुहाहो

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मे मनोहरः प्रबन्धः।

**नटी -**

किं णामहेओ सो, केण कइणा णिम्मिदो।

(किन्नामधेयोऽसौ, केन कविना निर्मितः।)

**सूत्र० -**

आर्ये, सर्वं कथयामि। श्रूयताम्- अस्ति तावत्त्रिभुवनमहनीयमहिम्नो[1] भगवतो विश्वेश्वराभिधानस्य शूलपाणेरायतनं वाराणसी नाम नगरी। तस्याञ्च-

**जातस्तत्सदुपाख्यभूसुरकुले श्रीरामभट्टात्मजः,**
**पातिव्रत्य पवित्र धन्यजनुषः श्रीद्वारकायाः सुतः।**
**विद्वत्सम्मतवैद्यनाथसुकविः शब्दार्थवाक्यार्थवित्,**
**श्रृङ्गाराद्‌भुतनाटिकां समतनोत् श्रीकृष्णलीलाभिधाम्।।८।।**

तां च निर्मायाऽसौ यात्रा प्रसंगागते मयि समुपजातप्रीतिः समर्पितवान्।

**नटी -**

ता सिद्धं अह्माणं समीहिदं।

(तत् सिद्धमस्माकं समीहितम्।)

**सूत्र० -**

आर्ये। न केवलमस्माकं, अपितु सकलसहृदयानाम्। यदुक्तमनेन कविना-

**यद्यस्ति रसरसायनसौहित्यौत्सुक्यतरलितं चेतः।**
**श्रृण्वन्तु तर्हि सरसाः सूक्तीः कविवैद्यनाथस्य।।६।।**

---

१. ख– महिमा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**नटी -**

अइमहुरो कव्वबंधो दीसइ।
(अतिमधुरः काव्यबन्धो दृश्यते)

**सूत्र० -**

आर्ये, किमुच्यते सकलालंकारिकशिरोमणेरमुष्य भणितिकौशलम्। एषा खल्वस्य वाचोयुक्तिः –

**सत्सम्प्रदायपरिशीलितसम्प्रभूत-**
**काव्यार्थतत्त्वमतिवासितमानसानाम् ।**
**व्युत्पत्तिनिर्मलधियां वचसां कवीनां,**
**सारामृतं सहृदयाः कतिचित्पिबन्ति।।१०।।**

**किञ्च -**

**मालतीकुसुमस्येव सौकुमार्यं कवेर्गिराम्।**
**कुतर्कार्ककरामर्शं न जातु सहते क्वचित्।।११।।**

**नटी**

अदिप्पउढो उवण्णासो।
(अतिप्रौढ उपन्यासः।)

**सूत्र० -**

आर्ये, रंगस्थितो . जनः संगीतकदर्शनोत्सुक अस्मद्विलम्बादलस इवाभिलक्ष्यते। तदेनं गीतेनाभिमुखीकरोतु तावद् भवती।

**नटी -**

कं ऋदुं अवलंबिअत्ति[1] आणवेदु अज्जो।
(कं ऋतुमवलम्ब्येत्याज्ञापयत्वार्यः।)

---

१. ख– भि

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सूत्र० -**

आर्ये, अमुमेवाभिनवप्रवृत्तं निखिलजनाह्लादकं शरत्समयमनुसृत्य गीयताम्। तथा हीदानीम्-

**वसुधा वसुधान्यधन्यरूपाऽभवदाकाशमपीन्द्रनीलनीलम्।**
**सलिलं जलजालिमञ्जु जातीकुसुमामोदसमीरणः समीरः।।१२।।**

**नटी -**

तह (इति गायति)

**णच्चंदि हत्थपल्लवदंसिदसिंगारविविहभंगीओ।**
**मालइलदा नदीओ वण[1]रंगे किण्ण फुल्लाओ।।१३।।**

**नृत्यन्ति हस्तपल्लवदर्शित श्रृंगार विविधभंगीकाः।**

**मालतीलताः नद्याः वनरंगे किञ्च फुल्लिताः।।१३।।**

**सूत्र० -**

आर्ये, साधुगीतम्। यतः सर्वतः समुल्लसन्नयनपुण्डरीकः कासार इव प्रसन्नो रंगो लक्ष्यते।

**(नेपथ्ये)**

भो भोः प्रमदवनवासिनो वनपालाः ................संशोध्यतां प्रमदवनभूमयः। एष खलु यदुकुलतिलको देवः सह सुहृदा विजयनन्देन वनमिदं दिदृक्षुरित एवाभिवर्तते।

**सूत्र० -**

(आकर्ण्य) आर्ये, श्रीकृष्णं मन्दिरान्निर्गतमाकलयन्नयं सभाजनः तत्सभाजनसमुत्सुक इव लक्ष्यते। तदावामपितावद्भूमिका सम्पादनाय गच्छावः। (इति निष्क्रान्तौ)

---

१. ख– वणं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## प्रस्तावना

(ततः प्रविशति विजयनन्देनानुगम्यमानः श्रीकृष्णः)

**श्रीकृष्णः -**

(समन्तादवलोक्य) अहो, सैरन्ध्रेव शरदा प्रसाधितेव सम्प्रति विभाति जगती। तथा ह्यस्याः-

**द्यौर्मूर्धा विमलो, रवीन्दुनयनद्वन्द्वः, स्फुरत्तारका-,**
**पुष्पालङ्कृत पुष्करालकचय प्राप्ताभिरामच्छविः।**
**प्रालेयाचलदक्षिणाद्रियुगलं तुंगस्तनौ, वारिधि,**
**स्फूर्जन्मेखलवर्षसंघजघनं श्रीशम्भुशक्तेः स्फुटम्।।१४।।**

**विज० -**

अश्रुतपूर्वं लोकोत्तरमेतद् वर्णनम्।

**श्रीकृष्णः -**

वयस्य, मन्दमारुतोपनीतो मनोहरोऽयं प्रमदवनमालतीकुसुमामोदः।

**विज० -**

वयस्य, किमुच्यते शरत्समयजीवित-सर्वस्वं खल्वेषा मालती।

**(नेपथ्ये)**

कहिं [1]णु क्खु मंदिरादो णिग्गदो णाहमाहवो पेक्खिदव्वो
(क्वनु खलु मन्दिरान्निर्गतो नाथमाधवः प्रेक्षितव्यः।)

**विज० -**

माधव ! माण्डव्यस्येव शब्दः श्रूयते।

---

१. ख–लु ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**श्रीकृष्णः -**

(पृष्ठतो दृष्ट्वा) नन्वागत एवासौ मामन्विष्यमाणः।

(ततः प्रविशति [1]माण्डव्यो नाम विदूषकः)

**विदू० -**

(परिक्रम्यावलोक्य [2]च) इदो दाव पमदवणुद्देसे अण्णेसामि (पुरोऽवलोक्य) एसो जदुणाहो मित्तेण विजअनंदेन सह पमदवणपडिहारभूमिंअलंकरेदि। ता जाव उपसव्वामि (सत्वरमुपसृत्य) जअदु जअदु जदुणाहो।

(परिक्रम्यावलोक्य च) इतस्तावत् प्रमदवनोद्देशे अन्वेषयामि (पुरोऽवलोक्य) एषो यदुनाथो मित्रेण विजयनन्देन सह प्रमदवनप्रतिहारभूमिमलंकरोति। तद्यावदुपसर्पामि (सत्वरमुपसृत्य) जयतु जयतु यदुनाथः।)

**श्रीकृष्णः -**

(सस्मितं प्रणम्य) कुतश्चिरकालाहूतस्यापि तवैतावान् विलम्बः। किन्निमित्तश्चासौ निसर्गविजितकामरूपस्यास्य देहस्यालंकरणाडम्बरः।

**विज० -**

वयस्य, कस्याश्चिदतिसुरूपायाः कन्यायाः पाणिग्रहणोद्यमस्य तर्कयामि।

**विदू० -**

तुम्हाणं धनमदमत्ताणं कण्णआपाणिग्गहनं जेव्व पडिभादि। मह उण दरिद्दस्स मोअआणं पाणिग्गहणं मोत्तूण किंपि अण्णं ण पडिभादि।

(युष्माकं धनमदमत्तानां कन्यकापाणिग्रहणमेव प्रतिभाति। मम पुनः दरिद्रस्य मोदकानां पाणिग्रहणं मुक्त्वा किमप्यन्यत् न प्रतिभाति।)

---

१. ख–"माण्डव्यो नाम" इति नास्ति।
२. ख– "च" इति नास्ति ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**श्रीकृष्णः -**

तत्कथय, किमत्र कारणम्।

**विदू० -**

सुणादु अज्जो। अहं खु अज्जेण आआरिओत्ति सुणिअ बह्मणीए भणिदं-अज्जउत्त माहवो कदावि तुमं पभादसमएण आआरेदि। ता तक्केमि एसो तुए सणाहो कमलाजत्तूसअं पेक्खिदुं गमिस्सदित्ति। ता तुमं अप्पणो भूसणेहिं अलंकरेमि। अण्णहा क्खु तुमं दट्ठूण सअलोज्जेव इत्थिआअणो भणिस्सदि, जं बह्मणीए भत्ता अदंसणिज्जो अधण्णो त्ति। एदं खु अकित्तिं साहोविदुं ण सकुणोम्मि।" इत्येव्वं भणिअ ताए आप्पणो भूसणेहिं अलंकरिअ पेसिदोह्मि।

(श्रृणोत्वार्यः। अहं खलु आर्येण आकारित इति श्रुत्वा ब्राह्मण्या भणितं-"आर्यपुत्र, माधवः कदापि त्वां प्रभातसमयेनाकारयति। तत् तर्कयामि, एषः त्वया सनाथः कमलायात्रोत्सवं द्रष्टुं गमिष्यतीति। तत् त्वां निजभूषणैरलंकरोमि। अन्यथा खलु त्वां दृष्ट्वा सकल एव स्त्रीजनो भणिष्यति यत् ब्राह्मण्याः भर्ता अदर्शणीयोऽधन्य इति। एतां खल्वकीर्तिं सोढुं न शक्नोमीत्येवं भणित्वा तया निजभूषणैरलंकृत्य प्रेषितोऽस्मि।

**श्रीकृष्णः -**

वयस्य, धन्या खलु त्वादृशाः स्त्रीभूषणैरलंक्रियन्ते।

**विज० -**

वयस्य, अपि नाम सत्य एव ब्राह्मण्यास्तर्कः।

**श्रीकृष्णः -**

वयस्य, महानद्य वृन्दावनगते कमलालये यात्रोत्सवः पौराणाम्। तद्यदि दर्शने कुतूहलमायुष्मतस्तदविलम्बितं गच्छामः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विज० -

तर्हि यावत् स्नानमात्रकरणे मम विलम्बस्तावदग्रतो यातु भवान्। अहमपि शीघ्रमेवानुपदमागच्छामि।

(इति निष्क्रान्तः)

विदू०-

णाह, सज्जो रधो मए दारूएण कारिदो मंदिरदुआरे चिट्ठदि। ता तहिं गच्छह्म। (नाथ, सज्जो रथो मया दारूकेण कारितः मन्दिरद्वारे तिष्ठति। तत्तत्र गच्छावः।)

श्रीकृष्णः-

वयस्य, जनसम्मर्दबाहुल्याद् रथयानं न[1] रोचये। तदेहि, पद्भ्यामेव गच्छावः।

(इति परिक्रामतः)

विदू० -

(पुरोऽवलोक्य) माहव, एसो ज्जेव [2]कमलालओ

(माधव, एष एव कमलालयः)।

श्रीकृष्णः -

एष एव समन्ततः कमलकुवलयमालालंकृतः समारोपितविचित्र-ध्वजपताकः कमलालयः।

विदू० -

(अग्रतोगत्वा) वअस्स, एसा क्खु कमलासरसी गअणतलं विअ पसण्णजला सोहइ।

---

१. ख "न" इति नास्ति

२. ख – किं कमलालञ्ज।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(वयस्य, एषा खलु कमलासरसी गगनतलमिव प्रसन्नजला शोभते।)

**श्रीकृष्णः -**

(निर्वण्य) वयस्य, गगनतलादपि अधिकसुषमेयम्। तथाहि-

**तारातिशायि कुमुदाकरकर्वुरेयम्,**
**चन्द्रातिभास्वरमरालकुलैरशून्या।**
**अत्यन्तनिर्मलतया सरसी जनानाम्,**
**स्वाधःस्थितं वियदिदं प्रकटीकरोति।।१५।।**

तदेहि यावदुपस्पृश्य कमलां विलोकयावः।

**विदू० -**

जं णाहो आणवेदि

(यन्नाथ आज्ञापयति)।

(इत्युभौ परिक्रम्य, सरोजलमुपस्पृश्य कमलालयं प्रविशतः)

**विदू० -**

(पार्श्वतोऽवलोक्य) हद्धी हद्धी कहिं गदो जदुणाहो (पुनरन्यतो दृष्ट्वा) जणसम्मद्दे पब्भट्टो मह सआसादो। होदु बाहिरदुआरे अण्णेसइस्सं (इति कमलां प्रणम्य, सत्वरं निष्क्रम्य) कधं इह वि न [1]दीसइ। विजअनंदो वि अणुबदं आअछामित्ति भणिअ णिग्गदो ता णागअ मुहुत्तं अस्सिं उज्जणचत्तरे वीसमामि (इत्युपविशति)।

(पार्श्वतो विलोक्य) हा धिक् हा धिक्, कुत्र गतो यदुनाथः (पुनरन्यतो दृष्ट्वा) जनसम्मर्दे प्रभ्रष्टो मम सकाशात्। भवतु, बहिर्द्वारे अन्वेषयामि। (इति कमलां प्रणम्य सत्वरं निष्क्रम्य) कथमिहापि न दृश्यते। विजयनन्दोऽपि "अनुपदमागच्छामी" ति भणित्वा नागतः। तन्मुहूर्तमस्मिन्नुद्यानचत्वरे विश्राम्यामि

---

१. क– दिसइ

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(इत्युपविशति)।

(ततः प्रविशति विजयनन्दः)

**विज० -**

(समन्तादवलोक्य) अहो महोत्सवातिरेको [1]नागरनारीणाम्। तथा ह्येताः-

**नानालंकृतिसत्कृतांगलतिका दिव्यैर्विचित्राम्बरैः,**
**संवीताः कमलार्चनाह्वतनवोन्मीलत्प्रसूनोच्चयाः।**
**भावोद्रेकवशंवदाद्‌भुतकलोद्‌गीतैः स्वरैः कर्णयोः,**
**प्रत्यक्षा वनदेवता इव कमप्यानन्दमातन्वते।।१६।।**

(अन्यतो विलोक्य) इदमपरं नयनोत्सवस्थानम्।

तथाहि-

**अन्योन्यपाणिकमलग्रथनैर्विलासा-,**
**दारच्य मण्डलतया भ्रमणातिरेकम्।**
**गीतामृतैर्विह(ल) सितैर्ललितालकान्त-**
**मातन्वते किमपि खेलनमम्बुजाक्ष्यः।।१७।।**

तद्यावत् कमलां विलोक्य सत्त्वरं माधवमन्वेषयामि। (इति परिक्रामति)

**(ततः प्रविशति विदूषकः)**

**विदू० -**

(पुरोऽवलोक्य, सहर्षम्) कघं विजअणदो आअदो ब्रंह्मणीए देव्वेण। ता अहुणा एदस्स हत्थं ण मोआइस्सं

(कथं विजयनन्द आगतो ब्राह्मणस्य दैवेन। तदधुनैतस्य हस्तं न मोक्ष्ये)।

---

१. ख– नगर

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विज० -**

(सक्रोधम्) धिङ् मूर्ख, नाद्यापि बालचापलमुपेक्षसे। तत्कथय क्व गतो माधव इति।

**विदू० -**

कमलाघरे जणसम्मदेण पब्भट्ठो मह सआसादो

(कमलागृहे जनसम्मर्देन प्रभ्रष्टो मम सकाशात्।)

**विज० -**

तदत्रैव क्वचिदुद्यानेऽन्वेषणीयो वयस्यः (पुरोऽवलोक्य) वयस्य, अयमित एवाभिवर्तते माधवः। परन्तु-

**अन्तर्गतरसाकूतमनोहरपदक्रमा।**
**विदग्धकवितेवास्य मतिरन्यैव लक्ष्यते।।१८।।**

अपि चास्य –

**प्रसादो नैवास्ये विलसति यथापूर्वमधुना,**
**निरालम्बा दृष्टिःश्वसितमतिदीर्घं मुहुरिदम्।**
**किमेतत् [1]किंवान्यत्प्रचुरमदनव्याधिनिलयो,**
**वयो हेतुव्याजादपि मनसि मोहं वितनुते।।१६।।**

(ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः)

**श्रीकृष्णः -**

(विचिन्त्य) अहो, दुर्निवारता व्यसनोपनिपातानाम्। यदद्यासंकल्पितमेव कमलालयागमनं माण्डव्यप्रोत्साहितोऽहमकरवम्, ततश्च जनसम्मर्दापगतस्य प्रतीक्षाणायाशोकतरूमूलवेदिकामध्यावसम्। तत्रासीनस्य च नयनगोचरता-मुपगतेयं वरांगना। इदानीन्तु-

---

१. ख–चा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**तत्तादृगद्भुतविलोलविलोचनान्त-**
**लींलाविलाससरसस्मितकान्तिकान्तम्।**
**बन्धूकबन्धुमधुराधरमानताङ्ग्या,**
**वक्त्रं मुहुः कलयतो जडताविरास्ते।।२०।।**

अपि च–

**यत्तत्पीतं ललितमधुरं लोचनाभ्यामुदारम्,**
**रूपं तस्याः सकल ललनामौलिमाणिक्यमूर्तेः।**
**तत्कालं तन्मनसि नितरामल्पमासीदिदानीम्,**
**व्याप्तं चित्ताद्बहिरपि हरिन्मण्डले सर्वतोऽपि।।२१।।**

किञ्च–

**विलासरंगे, ललनाङ्गकेऽस्मि-**
**न्निपीय लास्यान्यथ तन्मयं सत्।**
**विधूतवेद्यान्तरमान्तरं मे,**
**तथा तथा नृत्यति वीतलज्जम्।।२२।।**

(विचिन्त्य) अहो, महाश्चर्यमेतत्। तथा हि-

**मधुरतां मृदुतां सुखहेतुतां,**
**प्रथमतो यददर्शयदीक्षणम्।**
**तदचिरेण गतं विपरीततां,**
**खलजनस्य यथैव सुभाषितम्।।२३।।**

**विदू०-**

वअस्स, एसो किं पि हिअए मंन्तअंतो विअ लक्खीअदि
(वयस्य एषः किमपि हृदये मन्त्रयन्निव लक्ष्यते।)

**विज० -**

नियतमयमंगनापांगभंगप्रसंगमनुध्यायति। अहो प्रमादः। यतः–

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**क्वायं मनोभवव्याधिरप्रतीकारदारुणः।**
**क्व चापिरचितक्लेशं सुकुमारमिदं वपुः।।२४।।**

तदेहि, सत्त्वरममुं प्रसंगान्तरेण विनोदयावः (इति समीपमुपसृत्य) सखे, माधव, कथमभिमुखागतमपि मां न लक्षयसि।

**माधवः-**

(विलोक्य, सावष्टम्भम्) सखे, विजयनन्द, स्वागतं भवतः।

**विदू०-**

जअदु जअदु जदुणाहो

(जयतु जयतु यदुनाथः)

**माधवः-**

माण्डव्य, कियच्चिरं त्वां प्रतीक्षमाणस्य व्यतिक्रान्तः समयः। तत् क्व च गतो भवान्।

**विदू०-**

कमलाधरं पइट्ठमात्तो ज्जेव्व जणसंमदेण तुह सआसादो पब्भट्ठो तदो बाहिरदुआरे आअछिअ तुमं अण्णेसंतो ण पेक्खामि तदो अस्सिं उज्जाणे पडिस्संतो उवविट्ठो जाव विजअणंदं देक्खूण पुणो वि जीअलोअं पविट्ठोह्मि।

(कमलागृहं प्रविष्टमात्रमेव जनसम्मर्देन तव सकाशात् प्रभ्रष्टः, ततो बहिर्द्वारे आगत्य त्वामन्वेषयन् न पश्यामि तदास्मिन्नुद्याने प्रविशन्नुपविष्टो यावद् विजयनन्दं दृष्ट्वा पुनरपि जीवलोकं प्रविष्टोऽस्मि।)

**माधवः -**

(विहस्य) तदेतद् व्रह्मवचेस माहात्म्यम्, यदेवंविधात्संकटान्मुक्तोऽसि।

**विज० -**

वयस्य, आवर्त्तनसमीपमुपगतस्तीव्रं तपति तपनः। तदेहि, तावदस्मिन्नुद्याने मुहूर्त्तमुपविशावः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विदू० -**

एत्थ अशोअरूक्खवेदिआए [1]उववि‌अ परिस्समं अवणेह्म

(अत्राशोकतरुवेदिकायां उपविश्य परिश्रममपनयेमः।)

(सर्वे परिक्रम्योपविशन्ति)

**विज०-**

वयस्य माधव, अद्य खलु कमलालोकनात्प्रतिनिवृत्तस्य भवतो मुखच्छायामन्यादृशीमाकलयामि। तद्यदि पांसुलीलालसहचरे अस्मिञ्जने न किञ्चिद्गोपनीयं कलयसि तदुच्यतामेतस्य मनोविकारस्य बीजम्।

**श्रीकृष्णः-**

वयस्य, न खल्वायुष्मतो हृदयान्निजहृदयं भिन्नमवधारयामि, तत् कथयामि। श्रूयताम्-अहं खलु कमलालयात् बहिर्निर्गत्य माण्डव्यप्रतीक्षणाय क्वचिदुपवेष्टुकामः कमलासरः परिसरालंकारस्य अलिकुलकरम्बितस्तवक-निकरपरिमलवासितदिङ्मण्डलस्य सप्तच्छदतरोः सुधामयवेदिकाया-मुपाविशम्। अनन्तरञ्च कमलालयबद्धदृष्टेः कुमारीवेषा वाङ्मनस व्यापार पारंगमरमणीयतानिधानं वनदेवतेव स्वर्गांनेव कमलेव निजमहोत्सव-दर्शनोत्सुका-

**निर्यान्ती कमलालयात्समवयोवेषैः सखीनां गणैः,**
**कौसुम्भं वसनं सुवर्णरचनाचित्रान्वितं विभ्रती।**
**अंङ्गैस्तप्त सुवर्णकान्तिकलितैरुद्भासयन्ती दिशः,**
**काप्यासीन्मम नेत्रपात्रमबलासीमन्तमुक्तामणिः।।२५।।**

**विज० -**

(आत्मगतम्) संगतो मदीयस्तर्कः (प्रकाशम्) ततस्ततः।

**श्रीकृष्णः - ततश्च-**

---

१. ख– उवविसिअ

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

[1]फुल्लेन्दीवरदाम दिक्षु परितः सा विक्षिपन्ती मुहुः,
नेत्रप्रान्तनिसर्गभंगिभिरथ प्रेक्ष्याग्रतो मां स्थितम्।
लज्जासंकुचितेक्षणा मम मनः सा तत्क्षणाच्चञ्चला-
पांगेनाचकृषे वशंवदमिव व्याधूतवेद्यान्तरम्।।२६।।

**विदू०-**

दूरट्ठिदेन वि कडक्खेण अंतलिहिदं वि (अ) हिअअं आअट्ठीअदित्ति अच्चरिअं खु एदं।

(दूरस्थितेनापि कटाक्षेणान्तर्लिखितमिव हृदयं अवतिष्ठतीत्याश्चर्यं खल्विदम्।)

**विज०-**

(विहस्य) मूर्ख, मणिमन्त्रौषधीनामिव वरांगनापांगभंगानामचिन्त्यः प्रभावस्तत्तूष्णीकः तावच्छृणु। (माधवं प्रति) सखे, ततस्ततः-

**श्रीकृष्णः-**

अनन्तरन्तु–

मन्दस्मितोल्लसितकान्तकपोलपालि-
रालीकराम्बुजनिवेशितपाणिपद्मा।
सा चञ्चलोल्लसदपाङ्गतरङ्गभङ्गै-,
राचार्यकं रतिपतेः प्रकटीचकार।।२७।।

तथा ह्यहमनया-

शिरोंऽशुकनिवेशनोद्यतभुजाग्रजाग्रत्स्फुट-,
स्तनोन्नतिसवेल्लितस्मितसुधाविमुग्धाधरम्।
भ्रमद्भ्रमरविभ्रमाद्भुतदृगन्तसञ्चारणै-
रनङ्गजयमङ्गलैर्मृगदृशा कृतार्थीकृतः।।२८।।

---

१. ख–"नीलोन्दीवरदाम" इतिपाठः। परन्तु "क" पाठः समीचीनः प्रतिभाति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ततश्च-

**चित्रार्पित इव रागादनिमिषनयनस्तदा पिबन्मधुरम्।**
**आसेचनममुष्या रूपाद्वैतं न तृप्यामि।।२६।।**

**विज०-**

वयस्य, अनुदिनमङ्गनासहस्रमालोकयतोऽपि भवतो हृदयस्य नैवंविधो वशीकारः कयाप्यङ्गनया [1]समुत्पादितस्तदवश्यमसौ सौन्दर्यसीमन्तिनी चित्रफलके निवेश्य [2]दर्शनीया वयस्येन मन्दिरमुपगतेन।

**विदू० -**

इह ज्जेव [3]वण्णेदु देवो एदाए रूवं जेण अहं वि दाव [4]जानिसं बह्मणीए रूवं [5]अनुहरेदि ण वेत्ति।

(इहैव वर्णयतु देव एतस्या रूपं येनाहमपि तावत् जानामि व्राह्मण्या रूपमनुहरति न वेति।)

**विज० -**

(विहस्य) अहो मूढतास्य वटोः।

**श्रीकृष्णः** - (विहस्य)

**रूपं तत्कथयामि कीदृशमहो लीलां दृशोः कीदृशी,**
**भंङ्गीस्थानगतिश्रियोक्तिषु पुनः कीदृग्विधा[6] भण्यताम्।**
**मन्दस्मेरमुखारविन्दमथ तद्वाच्यं मया कीदृशम्,**
**वाचां गोचरतो बहिर्यदखिलं तस्याः समुज्जृम्भते।।३०।।**

---

१. क– समुत्पाद्य
२. ख– दर्शनीयो
३. ख– वहनेदु।
४. ख– जाणिसां
५. ख– हेरेदि
६. खा– धा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तथापि संक्षेपतः कथयामि। श्रूयताम्-

**अपाङ्गतटरिङ्ग्णव्यसनि नेत्रनीलोत्पलम्,**
**मुखं दरविकस्वरस्मितसुधांशुनीराजितम्।**
**उरः क्रमसमुल्लसत्कुचविचित्रशोभाधरम्,**
**कुरङ्कदृशो मनोहरति सन्मुनीनामपि।।31।।**

**विज० -**

विदग्ध सीमातिवर्तिनो वयस्यस्यैवं विधया वन्दितयैव निवेदितमिदं यल्लोकोत्तरमस्याः रामणीयकमिति। तत्कथ्यतां तावदनन्तरवृत्तान्तः।

**श्रीकृष्णः -**

ततश्च, कञ्चुकिजनपरिवृता शिविका मुपनीतामनिच्छन्त्यपि गन्तुमसौ मुहुर्मुहुरपांङ्गमालया मामावघ्नती कथं कथमपि समारुह्य प्रस्थितवती। चलितायां च ससखीजनायां तस्मात्सखीकदम्बात् सव्याजं निर्गत्य काचित् प्रगल्भाकृतिः सविनयमुपसृत्य मां मत्करकलितकमलप्रार्थनमिषादेवमुक्तवती- महाभाग, लोकोत्तरकान्तिकमनीय- मेतदायुष्मतः पाणिकमलमभिलषति किल समुत्सुका अतनुतापविनोदनायासावस्मत्सखी (सावस्मत्सखी)। तदेतत्परिग्रहेण कृतार्थीकरोतु स्वीयकरपंकजमिति।

**विज० -**

अहो, श्लेषोक्तिनिपुणता।

**श्रीकृष्णः -**

ततश्चासौ स्वयमेव निवेदितवती तत्कुलनामनी यथा देवपादच्छायोप-जीविनः प्रत्यर्थिकृपाकृपणकृपाणस्य वृषभानोरेषा कुमारी राधा नाम। अहञ्चास्याः प्रसादपात्रं ताम्बूलकरंकवाहिनी प्रियदर्शनाभिधानेति।

**विज० -**

वयस्य, वृषभानोरात्मजेति सर्वमुपपन्नमिदानीम्।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**श्रीकृष्णः -**

कथमिव।

**विज० -**

तदेतत्कथयामि, श्रूयताम्-वृषभानुः किल अतिक्रान्तयौवनोऽपत्यमपश्यन् सहभार्यया कुलदेवतां कमलामुग्रेण तपसा समाराधितवान्। ततश्चाराधन-प्रसन्नया कमलया स्वप्नेऽभिहितः [1]यथा वत्स वृषभानो, भवदाराधनेन तुष्टया मया तव धर्मपत्न्या गर्भेंऽशेनावतरिष्यते। तदलमिदानीं तपः क्लेशेन; आराधनाच्च राधेति ममाख्या वक्तव्येति सैषा कमलैवावत्तीर्णेति युक्तमीदृशं रामणीयकमिति।

**श्रीकृष्णः -**

कथं पुनरयमुदन्तो वयस्येन विदित इति श्रोतुमिच्छामि।

**विज० -**

वयस्य, कथयामि यतोऽस्य वृत्तान्तस्याधिगमः। इह खलु वृन्दावनैकान्त-निकुञ्जवासिनी साधुव्रता नाम तापसी विष्णुभक्ता देवेनापि तत्र सञ्चरता नयनगोचरीकृता भवेत्।

**श्रीकृष्णः -**

या खलु निखिलयोगदीक्षादक्षेति लोकप्रवादः।

**विज० -**

सा च मद्भ्रातरि जयदेवे भक्तिवंशवदतया[1] पुत्रनिर्विशेषां प्रीतिमादधाना तं प्रति प्रसङ्गतो रहस्यमिदं कथयामास। [2]तदेतत् भ्रात्रा सह गतेन मयाधिगतमिति।

---

१. ख– "त" नास्ति

२. ख–तदेतद्भुत्रा–" इत्याद्यारम्य..... " साधुव्रतावाक्येषु" इत्याद्यन्तं खपुस्तके नोपलभ्यते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**श्रीकृष्णः-**

एवन्तर्हि, नैतदन्यथा शंकनीयम्।

**विज०-**

कः सन्देहः साधुव्रतावाक्येषु। तत्कथयतु वयस्यो वृत्तान्तशेषम्।

**श्रीकृष्णः-**

ततश्च, तत्कमलं पाणिगतं तया मुहुः प्रार्थ्यमानस्तस्यै दत्तवान्। असौ पुनरत्यादरेणावनतीभूय सप्रणाममञ्जलिना तदादाय शिरसि धारयन्ती "प्रसादसीमेयं देवस्य" इत्यमिधाय सत्त्वरं प्रस्थितवती। चलितायाञ्च तस्यामहमपि तमुद्देशं शून्यमिवाकलयन्नुत्थाय माण्डव्य मन्वेषयितुमसमर्थस्तामेवानुगंतेन सकरुणेनान्तः करणेन विकलसकलावयवः प्रतिनिवृत्त इति।

**विज०-**

सन्धारयतु तावदिदानीं देवः स्वहृदयम्। साधुव्रतातीर्थमेवात्र पर्याप्तमस्मन्मनोरथसाधनायेति।

**विदू० -**

(यज्ञोपवीतं हस्ते धृत्वा) जइ अहं सच्चो ब्रह्मणो ता अज्जस्स एदाए कण्णआए शिध्धं जेव्व समागमो हुविस्सदि, किं उण देविए सच्चभामाए चंडत्तणं विआरिअ पज्जाउलोह्मि।

(यद्यहं सद्ब्राह्मणस्तदार्यस्य एतया कन्यकया शीघ्रमेव समागमो भविष्यति। किं पुनर्देव्या सत्यभामायाश्चण्डत्वं विचार्य प्रत्याकुलोऽस्मि)

**श्रीकृष्णः -**

(विहस्य) वयस्य, धूर्तोऽयं वटुस्तदयं शिक्ष्यतां यथा नैनं वृत्तान्तमन्तःपुरे सञ्चारयेत्।

**विज० -**

माण्डव्य, किं व्रवीति देवः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विदू० -

किं अहं देवेन पिसुणो जाणिदो
(किमहं देवेन पिशुनो ज्ञातः।)

श्रीकृष्णः -

वयस्य, प्रमादचापलपरिजिहीर्षयैवंशिक्षितो नान्यथासम्भावनया।

विदू० -

सच्चं भणादि देवो
(सत्यं भणति देवः)।

**(नेपथ्ये)**

सुखाय माध्यन्दिनी सन्ध्या भवतु देवस्य। तथाहि इदानीम्-

**आमध्याह्नमसौ रथेन जविना व्योमार्द्धमार्गागतः.**
**क्लान्ताश्वश्रमशान्तये दिनमणिः स्थेमानमालम्बते।**
**छाया तत्समरेखयैव निभृतं यत्पादमूले स्थिता,**
**सेयं पत्यनुसारसारसरसा नारीजनस्यौचिती।।३२।।**

विज०-

(आकर्ण्य) देव, [1]वैतालिकेन आवेदिता प्रत्यक्षा च सहस्रकिरणस्याम्बर-मध्यरेखास्थितिः तदिदानीमितो मन्दिरमेव गच्छावः।

**(इति निष्क्रान्ताः सर्वे)**

**(इति प्रथमोऽङ्कः)**

---

१. ख– तैतालिकेन

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# अथ द्वितीयोऽङ्कः

(ततः प्रविशति सशिष्या साधुव्रता)

**साधु॰ -**

वत्से, प्रियव्रते।

**प्रिय॰ -**

आण्वेदु[1] भअवदी
(आज्ञापयतु भगवती)

**साधु॰ -**

कथं नामस्मत्प्रियशिष्येण माधवसुहृदा वत्सेन विजयनन्देन सम्प्रार्थितो माधवस्य राधापाणिग्रहः सम्पादितः स्यात्।

**प्रिय॰ -**

भअवदि [2]किं एत्थ तुम्हाणं वावारेण। णहु माहवसरिछो वरो [3]विसभानुणा उवेक्खिदव्वो। अणुऊलो अ विसभाणू माहवस्स। ता सुअरं खु एदं कज्जं जाणामि ([4]ण) भअवदीए अहिणिवेसस्स सरिसं ति।

(भगवति, किमत्र युष्माकं व्यापारेण। न खलु माधवसदृशो वरो वृषभानुनोपेक्षितव्यः। अनुकूलश्च वृषभानुर्माधवस्य। तत्सुकरं खलु एतत्कार्यं जानामि भगवत्या अभिनिवेशस्य सदृशमिति।

**साधु॰** - अयि सरले,

---

१. क– आवेदु
२. ख– कं
३. ख–णु।
४. ख – इत्यधिकम्

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यदि सुकरमिदं स्यात्कार्यमार्योऽतिविज्ञः,
स खलु विजयनन्दो मां कथं प्रार्थयेत।
किमपि भवतु वा यत्स्वीकृतं तत्र हेला,
महितजनविगीता नोचिता मद्विधानाम्।।१।।

विचार्यमाणे पुनर्नैतत् सुकरमिवावधारयामि। यतो मनस्वी माधवो विशेषतश्च सत्यभामाया दाक्षिण्येन नियन्त्रितो न वृषभानुमेतां कुमारीं याचयितुमीष्टे। वृषभानुश्च चरमे वयसि समासादितामेकामेवंगुणामात्मजामेवं-विधसापन्त्यदोषक्लिष्टां प्रायशो नेहेत। सत्यभामानुरोधश्चास्यापि तदवस्थः।

**प्रिय०** -

जुत्तं भअवदीए आणत्तं, अहं उण ण भअवदीए ववसाअं निवारेदुं विण्णवेमि किं उण किं वि अण्णं कज्जं हिअए करिअ एव्वं भणामि।

(युक्तं भगवत्या आज्ञप्तम्, अहं पुनर्न भगवत्या व्यवसायं निवारयितुं विनिवेदयामि। किं पुनः किमप्यन्यत्कार्यं हृदये कृत्वैवं भणामि।)

**साधु०** -

वत्से, कथय किन्तावदन्यदभिप्रेतं कार्यम्।

**प्रिय०** -

सुणादु भअवदी, अत्थि दाव वुसभाणु भादुपुत्तिआ चंदप्पभा णाम ताए मए रहस्सभासणप्पसंगो। तथा जइ भअवदी आणवेदि तदो मए विजअणं [1]दानुराअं तेण तेण गुणोवण्णासेन गमइदव्वेति।

(श्रृणोतु भगवती, अस्ति तावत् वृषभानुभ्रातृपुत्रिका चन्द्रप्रभा नाम। तस्याश्च मया रहस्यभाषणप्रसंगः। तद्यदि भगवती आज्ञापयति तदा मया विजयनन्दानुरागं तेन तेन गुणोपन्यासेन गमयितव्या इति।

---

१. ख – णुरअं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**साधु० -**

साधु वत्से, साधु। सम्यगेतद्विचारितं भवत्या। प्रथमोपकर्त्तव्यो हि प्रियशिष्यो मे विजयनन्दस्तदविलम्बितं क्रियतामत्र यत्नः। राधामाधवयोस्तु घटनायां नियोजितैव मया सुमतिका।

**प्रिय० -**

जं भअवदी आणवेदि

(यद् भगवत्याज्ञापयति)

(इति निष्क्रान्ता)

**साधु० -**

(दिनवेलां निरीक्ष्य) कथं माधववृत्युपलम्भाय प्रेषिता चिरयति सुमतिका। अतिक्रामति च स्नानवेला। तद्यावदाह्निकं सम्पादयामि (इति निष्क्रान्ता)

**प्रवेशकः**

(ततः प्रविशतश्चेट्यौ)

**एका-**

सहि सुणअणे, कहं पुरट्ठिदं वि मं अपरिचिदं विअ ण पेक्खसि।

(सखि सुनयने, कथं पुरःस्थितामपि मामपरिचितामिव न पश्यसि)

**द्वितीया-**

(सचकितमवलोक्य) कहं सुवअणा, सहि सुवअणे सच्चं कज्जवावुड-हिअअए मए ण दिट्ठासि।

( (सचकितमवलोक्य) कथं सुवदना। सखि सुवदने ! सत्यं, कार्यव्यापृतहृदयया मया न दृष्टासि।)

**सुव० -**

सहि जइ ण गोवणिज्जं ता कहेदु कज्जं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(सखि, यदि न गोपनीयं तत्कथयतु कार्यम्)

**सुन०-**

सहि तुमं पि किं सा आणासि जेण एव्वं मं उवालंभेसि।

(सखि, त्वमपि किं न जानासि येनैवं मामुपालम्भसे)

**सुव०-**

सहि अहं एत्तिअं जाणामि जं कमलाजन्तूसए माहवदंसणजणिदानुराआ भट्टदारिआ उक्कंठिदेत्ति।

(सखि, अहमेतावदेव जानामि यत्कमलायात्रोत्सवे माधवदर्शन-जनितानुरागा भर्तृदारिका उत्कण्ठितेति)

**सुन०-**

सहि तदो पिअदंसणाए अह्माणं सआसादो पब्भट्ठाए दस्स महानुभावस्स समीपं गदुअ हस्तगदं लीलापंकअं अब्भत्थणपुव्वअं गेन्हिअ [1]समासादिआ भट्टदारिआ।

(सखि, ततः प्रियदर्शनयाऽस्माकं सकाशात् प्रभ्रष्टया तस्य महानुभावस्य समीपं गत्वा हस्तगतं लीलापंकजं अभ्यर्थनपूर्वकं गृहीत्वा समासादिता भर्तृदारिका।)

**सुव० -**

हुं तदो

(आम्, ततः)

**सुन० -**

तदो सव्वं जनं परिहरिअ पिअदंसणादुदिआ भट्टदारिआ विवित्तं सेवदित्ति।

---

१. क– समासादिऔदा। "औ" इत्यधिकं प्रतिभाति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(ततः सर्वंजनं परिहृत्य प्रियदर्शनाद्वितीया भर्तृदारिका विविक्तं सेवत इति।)

सुव०-

चदुरा क्खु पिअदंसणा भट्टदारिअं विणोदेदि। अह सुमदिआए तुमं किमंतअंती मंदिरदुआरे आसि।

(चतुरा खलु प्रियदर्शना भर्तृदारिकां विनोदयति। अथ सुमतिकया त्वं किं मन्त्रयन्ती मन्दिरद्वारे आसीत्।)

सुन०-

सव्वं कहेमि, सुमदिआए भणिदं जह सुणअणे, राधिआ लिहिदं माहवपडिछंदअं पिअदंसणासआसादो णिहुअं गेन्हिअ लहु आअच्छेति। गेन्हिअ ताए माहवस्स दंसिदं। तेण वि तहिं जेव्व भट्टदारिआ आलिहिदा। पुणो वि तं गेन्हिअ पडिनिउत्ताए मंदिर-दुआरे मिदाए सुमदिआए भट्टदारिआउत्तंत्तं पुछिदमि, तदो हिम कथिदं जधा विवित्ते पिअदंसणा सणाहा [1]वट्टदित्ति। तदो अ ताए [2]मह आगमणं पिअदंसणाए [3]निवेदेहित्ति यणिआ तधा करिअ तं पवेसिअ णिवुत्तंह्मि। तुमं उण कहिं पत्थिदा।

(सर्वं कथयामि, सुमतिकया भणितं यथा- सुनयने, राधिकालिखितं माधवप्रतिच्छन्दकं प्रियदर्शनासकाशात् निभृतं गृहीत्वा लघु आगच्छेति। ततो मया तथा कृत्वा, समर्पितं चित्रफलकं गृहीत्वा तया माधवस्य दर्शितम्। तेनापि तत्रैव भर्तृदारिका आलिखिता। पुनरपि तद्गृहीत्वा प्रतिनिवृत्तया मन्दिरद्वारे मिलितया सुमतिकया भर्तृदारिकावृत्तान्तं पृष्टास्मि। ततो मया कथितं यथा- " विविक्ते प्रियद्दर्शनासनाथा वर्तत" इति। ततश्च तया

---

१. ख – वदुदिति
२. ख – महा
३. ख – णारिवेदेहित्ति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

"मदागमनं प्रियदर्शनायै निवेदय" इति भणिता, तथा कृत्वा, तां प्रवेश्य निवृत्तास्मि। त्वं पुनः कुत्र प्रतिस्थतासि।

**सुव॰ -**

अहं वि पिअव्वदाए आगमणं चन्दप्पभाए णिवेदिअ तं पवेसिअ समागदह्मि।

(अहमपि प्रियव्रताया आगमनं चन्द्रप्रभायै निवेद्य तां प्रवेश्य समागतास्मि।)

**सुन॰ -**

सहि ता [1]तुमं वि रहस्सं पुछिदव्वासि।

(सखि, तत् त्वमपि रहस्यं प्रष्टव्यासि)

**सुव॰ -**

सहि सव्वं कहेमि। माहवस्य किल [2]पिअमित्तं विजअणंदो णाम से अहिलसिदो। (सखि, सर्वं कथयामि। माधवस्य किल प्रियमित्रं विजयनन्दो नामास्या अभिलषितः)

**सुन॰-**

दिट्ठिया दुवेण्णं वि रूवं अहिलासट्ठाणं। कहिं उण विअअणंदो चंदप्पभाए दिट्ठो भवे।

(दिष्ट्या द्वयोरप्यनुरूपमभिलाषस्थानम्। कथं पुनर्विजयनन्दश्चन्द्रप्रभया दृष्टः)

**सुव॰ -**

तहिं जेव्व गछन्तो जत्तापडिणिवुत्ताए चंदप्पभाए दिट्ठो भवे।

(तत्रैव गच्छन् यात्राप्रतिनिवृत्तया चन्द्रप्रभया दृष्टो भवेत्)

---

१. क – सुम
२. क – पिअमित्त

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सुन० -**

सहि कहं उण एदाणं समीहिअ दं साहिअं भवे।

(सखि, कथं पुनरेतयोः समीहितं साधितं भवेत्)

**सुव० -**

अइ उज्जुए, पिअव्वदा सुमदिआणं वावारेण किं ण आणीअदि जधा साधुव्वदाए एत्थ अहिओओत्ति। ता एहि णिअव्वावारं करेह्म।

(अयि ऋजुके, प्रियव्रतासुमतिकयोः व्यापारेण किं न ज्ञायते यथा साधुव्रताया 'अत्राभियोग इति। तदेहि निजव्यापारं कुर्वः।)

(इति निष्क्रान्ते)

(ततः प्रविशति सुमतिका प्रियदर्शनाभ्यां रहस्युपास्यमाना राधिका)

**राधि० -**

हला पिअदंसणे किं सुणअणाए मंतेसि।

(हला प्रियदर्शने, किं सुनयनया मन्त्रयसे)

**प्रिय० -**

सहि, ण एसा सुणअणा। भअवदीए साधुव्वदाए तुह कुसलं जाणिदुं पेसिदा सुमदिआ क्खु एसा।

(सखि, नैषा सुनयना। भगवत्या साधुव्रतया तव कुशलं ज्ञातुं प्रेषिता सुमतिका खल्वेषा)

**राधिका-**

(ससंभ्रमं, शयनादुत्थाय) हला सुमदिए साअदं तुए। कुसलं अ भअवदीए साधुव्वदाए।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(ससंभ्रमं, शयनादुत्थाय) हला सुमंतिके, स्वागतं तव। कुशलं च भगवत्याः साधुव्रतायाः)

**सुम० -**

सहि तुम्हाणं कुसलं जेव्व भअवदी अत्तणो कुसलं भणेदि, ण उण अण्णं।

(सखि, युष्माकं कुशलमेव भगवत्यात्मनो कुशलं भणति, न पुनरन्यत्)

**राधिका -**

(सवैलक्षण्यमात्मगतम्) किं उण भअवदीए अअं उत्तंतो जाणिदो भवे (प्रकाशम्) किं अण्णं [1]भअवदीं विणा अह्माणं सरणं। ण हु किं वि अच्चाहिदं भअवदीए पसाएण। ((सवैलक्षण्यमात्मगतम्) किं पुनः भगवत्या अयं वृत्तान्तो ज्ञातो भवेत् ( प्रकाशम्) किमन्यद् भगवतीं विनास्माकं शरणम्। न खलु किमप्यत्याहितं भगवत्याः प्रसादेन।)

**सुम०-**

को एत्थ संसओ, ण हु सिविणेवि एदं भअवदीपहावेण सम्भावीआदि कि उण एदं पुछीअदि।

कोऽत्र संशयः। न खलु स्वप्नेऽपि एतत् भगवतीप्रभावेन सम्भाव्यते। किं पुनरेतत् पृच्छसि) संस्कृतमाश्रित्य-

**यद्दन्तिदन्तपरिपाण्डुकपोलमास्यं,**
**यत्सर्वकेलिषु पराङ्मुखता तवैषा।**
**यच्चापि [2]चित्तमनिशं सविचारमास्ते,**
**तत्सत्यमालि वद केन हृतं मनस्ते।।२।।**

---

१. क– भअवदिं
२. ख – मणिशं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधिका -**

(सलज्जमधोमुखी तिष्ठति)

**प्रिय० -**

सहि सुमदिए किं एदाए भणिदेण। तुमं जेव्व पेक्ख एदाए शरीरावत्थं। ता भअवदीए जहदिट्ठं कहेदु भवदी।

(सखि सुमतिके, किमेतस्याः भणितेन। त्वमेव पश्यैतस्याः शरीरावस्थाम्। तद् भगवत्यै यथादृष्टं कथयतु भवती।)

**सुम०-**

सहि राधिए भअवदीए समीवं परिचइअ चिरं खु णिग्गदह्मि, ता शिघ्घं गच्छेमि। (सखि राधिके, भगवत्याः समीपं परिचर्य चिरं खलु निर्गतास्मि। तच्छीघ्रं गच्छामि) (इति निष्क्रान्ता)

**राधिका-**

(सासूयम्) पिअदंसणे की (दि) सं तुमं मह लहुत्तणं भअवदीए पआसेसि। (प्रियदर्शने, कीदृशं त्वं मम लघुत्वं भगवत्यै प्रकाशयिष्यसि)

**प्रिय०-**

सहि किं एत्थ लहुत्तणं। ण हु [1]माहवाणुराए वअणिज्जं संभावीअदि। एव्वं वि णाम गोवणिज्जं जइ अच्चाहिदं ण संभावीअदि। तुह उण अवत्था अदिभूमिं गदा दीसइ। ता ण जुत्तं दाणिं उवेक्खिदुं। साधुव्वदा उण देवस्स देवीए अ रहस्सं अकधिअ अणुऊलदासंपादणे समत्था णिउणेत्ति विआरिअ ण तुए कोवेण अप्पा संदावइदव्वेत्ति विण्णवेमि।

(सखि, किमत्र लघुत्वम्। न खलु माधवानुरागे वचनीयत्वं सम्भाव्य एवमपि नाम गोपनीयत्वं यद्यत्याहितं न सम्भाव्यते। तव पुनरवस्था अतिभूमिं

---

१. ख – माहवाराउए

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

गता दृश्यते। तन्न युक्तमिदानीमुपेक्षितुम्। साधुव्रता पुनः देवस्य देव्याश्च रहस्यमकथयित्वा अनुकूलतासम्पादने समर्था निपुणेति विचार्य न त्वया कोपेनात्मा संतापयितव्येति विनिवेदयामि)

**राधिका -**

हला पिअदंसणे सच्चं सो महाणुभाओ सव्व[1]जनसलाहणिज्जो। तुम्हाणं उण सहीणं तारिसस्स णिज्जिदाणंगरूवस्स च्चंगत्तणावमाणिदरदिविब्भमाणं सच्चभामा पहुदीणं सुन्दरीणं वल्लहस्स अणुरूवेति भणामि मा क्खु लोए उवहसणिज्जं मंतेधत्ति।

(हला प्रियदर्शने, सत्यं सो महानुभावः सर्वजनश्लाघनीयः। युष्माकं पुनः सखीनां तादृशस्य निर्जितानङ्गरूपस्य सौन्दर्यसम्पदवमानितरतिविभ्रमाणां सत्यभामाप्रभृतीनां सुन्दरीणां वल्लभस्यानुरूपेति भणामि। मा खलु लोके उपहसनीयं मन्येत इति।)

**प्रिय०-**

(सासूयम्) सहि ण दे जुत्तं अप्पगुणावमाणणं। [2]किं तुए ण दिट्ठो चित्तलिहिदो वि अविह्मअत्थिमिदणअणपुंडरीएहि पेख्खंतो माहवो। किं अ-

**चंगत्तणं ण किल ताण सलाहणिज्जं,**
**[3]जाणं वसो ण पिअचित्तकुरंगओसो।**
**जाणं तु होइ गुणपासवसो पिआणं,**
**ताणं जणे हि लडहत्तणं अंपगींद।।३।।**

अवि अ-

जइ एव्वं वि णाम ण तुह विस्संभो ता पेख्खदु पिअसही एदं (इति चित्रफलकमर्पयति)

---

१. ख – जण
२. ख – पुस्तके "किं तुए" इत्यस्य पूर्वं "मिमाक्खुलोओ" इत्यधिकं प्रतिभाति।
३. ख– "जा" इति नास्ति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(सखि, न ते युक्तमात्मगुणावमाननम्। किं त्वया न दृष्टश्चित्रलिखितोऽपि अविघ्नस्तिमितनयनपुण्डरीकैः पश्यन् माधवः। किञ्च-

**सौन्दर्यं न किल तासां श्लाघनीयं,**
**यासां वशो न प्रियचित्तकुरङ्गकोऽसौ।**
**यासां तु भवति गुणपाशवशो प्रियाणां,**
**तासां जनैर्हि लटभत्वं सुप्रगीतम्।।३।।**

अपि च –

यद्येवमपि नाम न ते विस्रम्भः, तत्पश्यतु प्रियसखी एतद् (इति चित्रफलकमर्पयति)

**राधिका** -

(विलोक्य) सहि केण उण एत्थ अहं आलिहिदा।

(सखि, केन पुनरत्राहमालिखिता)

**प्रिय०** -

जो ज्जेअ तुमं णिअस्स अणुरूअं चिंतेदि तेण। ज्जेअ चित्तेवि दाव समागमो होदुत्ति आलिहिदा।

(यो येन त्वं निजस्यानुरूपं चिन्त्यते तेन। येन "चित्रेऽपि तावत्समागमो भवत्वित्यालिखिता।

**राधिका**-

(उपरितो दृष्ट्वा) कधं कव्वबन्धो वि दीसइ

(कथं काव्यबन्धोऽपि दृश्यते)

(वाचयति)

**रामाः सन्ति न किं मनोहरतया याः कामिनां मानसम्,**
**दृष्टाः सम्मदयन्ति यौवनमदेनालंकृता भूतले।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**निर्माणं त्विदमन्यदेव मदनस्योज्जृम्भते सुन्दरम्,**
**स्त्रीरत्नं नयनामृतं किमपि यत्सम्मोहयत्यान्तरम्।।४।।**

(इति वाचयित्वा सलज्जं सहर्षञ्चात्मगतम्)

दिट्ठिआ क्खु अणंगस्स अणुऊलं ववसिअं (प्रकाशम्) सहि जुत्तं णेदं सरिसं णेदं तुए आरध्धं।

(दिष्ट्या खल्वनंगस्यानुकूलं व्यवसितम् (प्रकाशम्) सखि, युक्तं नेदं, सदृशं नेदं त्वयारब्धम्)

**[1]प्रिय० -**

सहि गोरी मे कुप्पदु जइ मए माहवस्स दंसिदं भवे। (सखि, गौरी मे कुप्यतु यदि मया माधवस्य दर्शितं भवेत्)

**राधिका -**

को उण अण्णो जणो संभावीअदि। (कः पुनरन्यो जनः सम्भाव्यते)

**प्रिय० -**

सहि सुमदिआए माहवस्स अच्चाहिदं आसंकमाणाए पेख्खामि त्ति मह सआसादो गेण्हिअ तस्स महाणुभावस्य दंसिरअं। अण्णं अ तुए वि एत्थ एक्को सिलोओ णिअवुत्तंतणिवेदओ [2]लिहीअदु त्ति विण्णवेमि।

(सखि, सुमतिकया माधवस्यात्याहितमाशङ्कमानया पश्यामीति मम सकाशात् गृहीत्वा तस्य महानुभावस्य दर्शितम्। अन्यच्च त्वयापि अत्रैकः श्लोको निजवृत्तान्तनिवेदको लिखितोऽस्त्विति विनिवेदयामि)

**राधिका -**

जह पिअसही भणेदि

---

१. ख – पुस्तके इतः प्रियदर्शनाराधिकयोः संवादो नोपलभ्यते।
२. ख – लिहीअहीअ दूत्तिण्णवेमि ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(यथा प्रियसखी भणति) (इति विचार्य लिखित्वा तस्याः हस्ते ददाति)

**प्रिय०** - (वाचयति)

**कुमुदिनी रहिते (तो)ऽपि कलानिधिः,**
**किरतु काममसौ किल चन्द्रिकाम्।**
**कुमुदिनी तु न तेन विनेक्षणं,**
**क्षणमपीदमुदञ्चयितुं क्षमा।।५।।**

(इति वाचयित्वा) सहि अअं खु मअणलेहो सुमदिआए हत्थेण माहवस्स दंसिदव्वो।

(सखि, अयं खलु मदनलेखः सुमतिकाया हस्तेन माधवस्य दर्शयितव्यः।)

**राधिका** -

सहि तदो तस्स केरिसो वुत्तंतो सुमदिआए कधिदो।

(सखि, तदा तस्य कीदृशो वृत्तान्तः सुमतिकया कथितः)

**प्रिय०** -

सअलभोअपरंमुहदाए परिवारजणं दुम्भेदित्ति।

(सकलभोगपराङ्मुखतया परिवारजनं दुनोतीति)

**राधिका** -

कुसलं दाव तस्स महाणुभावस्स होदु।

(कुशलं तावत्तस्य महानुभावस्य भवतु)

**प्रिय०** -

जं दाव पिअसहीए कुसलं तं जेव्व तस्स वि कुसलं।

(यत्तावत् प्रियसख्याः कुशलं तदेव तस्यापि कुशलम्)

**राधिका** -

सहि ण हु पराहीणस्स इमस्स जणस्स साहीणं कुसलं संभावीअदि

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(सखि, न खलु पराधीनस्यास्य जनस्य स्वाधीनं कुशलं सम्भाव्यते)

(संस्कृतमाश्रित्य)

**अतन्द्रश्चन्द्रोऽयं ज्वलतु गगने पावक इव,**
**स्मरो वारं वारं व्यथयतु ममाङ्गानि विशिखैः।**
**सह प्राणैश्चेतस्त्यजतु मम गात्रं न तु पुनः,**
**कुलं कौलीनेनाहह मलिनयाम्यद्य विमलम्।।६।।**

**प्रिय० -**

सहि साधुव्वदातित्थं जेव्व एत्थ सरणीकरणिज्जं जेण अवज्जलेसोवि ण संकिदो भवे।

(सखि, साधुव्रतातीर्थमेवात्र शरणीकरणीयम्, येनावद्यलेशोऽपि न शंकितो भवेत्)

**राधिका -**

ण हु भअवदीसआसं अप्पणो लहुत्तणं पआसिदुं पहवामि।

(न खलु भगवती सकाशमात्मनो लघुत्वं प्रकाशयितुं प्रभवामि)

**प्रिय० -**

अहमारिसस्स जणस्स मुहेण जेव्व भअवदी जाणिस्सदि। णिअसहीए उण मौणं जेव्व णिवेदणं।

(अस्मादृशस्य जनस्य मुखनैव भगवती ज्ञास्यति। प्रियसख्याः पुनर्मौनमेव निवेदनम्)

**(प्रविश्य)**

**चेटी -**

भट्टदारिए भअवदी साधुव्वदा सुमदिआसणाहा पडिहारभूमिं उवट्ठिदा।

(भर्तृदारिके, भगवती साधुव्रता सुमतिकासनाथा प्रतिहारभूमिमुपस्थिता)



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधिका -**

(सहर्षम्) हंजे शिघ्घं पवेसीअदु।

((सहर्षम्) हज्जे, शीघ्रं प्रवेशयतु)

**चेटी -**

तह (इति निष्क्रम्य) एसा भट्टदारिआ चिट्ठदि पविसदु भअवदी।

(तथा (इति निष्क्रम्य) एषा भर्तृदारिका तिष्ठति, प्रविशतु भगवती)

(ततः प्रविशति सुमतिकानुगता साधुव्रता)

**साधु० -**

सुमतिके, समाकलय क्वासौ राधिका।

**सुमतिका -**

(अग्रतो भूत्वा) एत्थ अपवरए अवविट्ठा [1]चिट्ठदि, इदो आअछदु भअवदी।

((अग्रतो भूत्वा) अत्रापवरके उपविष्टा तिष्ठति इत आगच्छतु भगवती)

**राधि० -**

(विलोक्य ससंभ्रमं प्रियदर्शनामवलम्ब्योत्थाय) भअवदी वंदामि।

(भगवती वन्दे)

**साधु० -**

वत्से, सौभाग्यसमीहितयोर्भाजनं भूयाः।

**प्रिय० -**

भाईरधीए विअ भअवदीए दंसणं किं णाम सुभं ण करेदि।

---

१. ख – चिदिइको आसाछदु भअवदी ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(भागीरथ्या इव भगवत्या दर्शनं किं नाम शुभं न करोति)

**साधु० -**

प्रियदर्शने, कथय तावत् सखीगतमुदन्तम्, किमित्यकस्मादतनुतापताम्यदङ्गलतिका संवृत्तेति।

**राधिका -**

(स्वगतम्) शिलिट्ठं खु भअवदीए वअणं।

(स्वगतम्) शिलष्टं खलु भगवत्या वचनम्)

**प्रिय०-**

(सस्मितम्) भअवदि, तस्स कहीअदि जो जणो अणुत्तं ण आणादि। भअवदी उण सच्चहिअआणं अहिदेवदेव्व वुत्तंतं जाणादि त्ति किं कहिदेण। सच्चं खु भअवदीए वअणं जधा अतनुतावमिलाणसरीरा पिअसहि त्ति अहिलासो उण सअलजदुउलमंडणे माहवेत्ति जाणिदं भोदु भअवदीए।

((सस्मितम्) भगवदि, तस्य कथ्यते यो जनोऽ नुक्तं न जानाति। भगवती पुनः सत्यहृदयानां अधिदेवतेव वृत्तान्तं जानातीति किं कथितेन। सत्यं खलु भगवत्या वचनं यथा अतनुतापम्लानशरीरा प्रियखखीति। अभिलाषः पुनः सकल यदुकलमण्डने माधवे" ति ज्ञातं भवतु भगवत्याः)

**साधु०-**

(सहर्षम्) साधु वत्से राधिके, साधु समुचिताभिलाषि ते हृदयम्।

**राधिका-**

(लज्जावनतवदना तिष्ठति)

**साधु०-**

वत्से,

**त्वमेवं लावण्यामृतसरिदसौ कान्तिजलधिः।**
**तडिल्लेखागौरी त्वमसि स च नीलाम्बुदतनुः।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विधातुर्व्यापारं सफलयतु [1]कामोऽयमचिरात्।
कुलञ्चैतद्भानोरिव च वृषभानोर्विकचतु।।७।।

**राधिका** -

(सलज्जं प्रियदर्शनां पश्यति)

**प्रिय०** -

भअवदी सिणेहेण णिअजणे गुणं पेख्खदि [2]तस्स उण महाणुभावस्स जिदकामरूअस्स केरिसं [3]हिअअं त्ति ण आणीमो।

(भगवती स्नेहेन निजजने गुणं पश्यति। तस्य पुनर्महानुभावस्य जितकामरूपस्य कीदृशं हृदयमिति न जानीमः)

**साधु०** -

[4]प्रियदर्शनेऽलमनया शंकया। ननु प्रागेव माधवानुरागोऽस्यामधिगतो मया विजयनन्देन सुहृदापायशंकिना निवेदितः। इदानीन्तु बलवदस्वास्थ्यमस्य सुमतिकैव निवेदितवती।

**प्रिय०** -

अण्णं अ जाणिदं भोदु भअवदीए जधा किल कस्सिं वि अवसरे गुणवदीए देवीए भणिदो भट्टा जं इअं कण्णआ कण्हहत्थे पडिवाडणिज्जेत्ति। तदो खु भत्तुणा भणिदं जइ सच्चभामा राधिअं पत्थेदि तदोज्जेअ एअं संभावीअदित्ति। अदो एदं दुक्करं त्ति भअवदीए णिवेदीअदित्ति।

(अन्यच्च ज्ञातं भवतु भगवत्याः यथा किल कस्मिन्नप्यवसरे गुणवत्या देव्या भणितो भर्ता यद्-"इयं कन्यका कृष्णहस्ते प्रतिपादनीया" इति। तदा

---

१. ख– कामपि चिरात्

२. ख "तस्स" नास्ति।

३. खपुस्तके– "हि सिणेहेण णिअजणे गुणं पेक्ख अअं" इत्येवं पूर्वतनग्रन्थस्य केचन अंशाः पुनारावृत्ताः सन्ति परन्तु "हि अअं" एतावानेवोपयोगी।

४. खपुस्तके – "दर्शनेऽलमनया" इत्यारभ्य "सुहृदपाय" इत्यन्तं पुनरावृत्तमस्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

खलु भर्त्रा भणितं "यदि सत्यभामा राधिकां प्रत्येति तदैवैतत् सम्भाव्यते" इति। अत एतद् दुष्कर मिति भगवत्यै निवेद्यत इति)

**साधु० -**

प्रियदर्शने, साधुदर्शी खलु तत्रभवान् वृषभानुः। तदस्य सत्यसंकल्पतां कुलदेवतैव विधास्यतीति न किञ्चिद् दुष्करं मंस्थाः।

**प्रिय० -**

ण किं वि दुक्करं भअवदीए पहावेण।

(न किमपि दुष्कर भगवत्याः प्रभावेन)

**सुम० -**

भअवदि, किं त्ति विलंबीअदि। णं अदिमेत्तं विअलोमाहवो।

(भगवति, किमिति विलम्ब्यते। नन्वतिमात्रं विकलो माधवः।)

**साधु० -**

वत्से, अनुजानीहि मां माधवप्रवृत्त्युपलम्भाय गन्तुम्।

**राधिका-**

जं भअवदी आणवेदि।

(यद् भगवत्याज्ञापयति)

**साधु०-** सुमतिके, उत्तिष्ठ मार्गमादेशय।

(इति निष्क्रान्ते)

।। इति द्वितीयोऽङ्कः।।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# तृतीयोऽङ्कः

(ततः प्रविशति श्रीकृष्णो विदूषकश्च)

**श्रीकृष्णः -**

(अनुध्यानं नाटयति)

**विदू० -**

वअस्स पमदवणस्स रमणिज्जत्तणं पेख्खदु भवं।

(वयस्य, प्रमदवनस्य रमणीयतां पश्यतु भवान्)

**श्रीकृष्णः -**

वयस्य,

**श्रृंगारमूर्तिरिव कीर्तिरिवाब्जयोनेः,**

**स्फूतिर्निजास्त्रविषयेव मनोभवस्य।**

**सा सद्विलासपरिपूर्तिरिवायताक्षी,**

**चेतश्च्युतान्यविषयं कुरुते मदीयम्।।१।।**

अल्पञ्चैतदुच्यते, यतः-

**मनसि वचसि नेत्रे श्रोत्रयुग्मे पुरस्तात्,**

**विलसति ननु पश्चात्पार्श्वयोः सर्वदिक्षु।**

**करणविषयमेवं सर्वमापूरयन्ती,**

**प्रकटयति विचित्रं कञ्चिदेषा विशेषम्।।२।।**

**विदू० -**

वअस्स, जइ वि ताए मुहं अदिरमणिज्जं तहं वि चंदमंडलादो ण विसेसो संभावीअदि।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(वयस्य, यद्यपि तस्या मुखमतिरमणीयं, तथापि चन्द्रमण्डलान्न विशेषः सम्भाव्यते)

**श्रीकृष्णः -**

सखे,

**दृष्टःशारदपूर्णिमासु विलसन्लोके शशांको न किम्,**
**किं प्रातर्नविकस्वराणि कमलान्यालोकितान्यादरैः।**
**कान्तिर्येयमलौकिकी सुवदने तन्व्याः समुज्जृम्भते,**
**तामेतां समुदाहरिष्यति जनः कुत्राद्भुते वस्तुनि।।३।।**

**विदू० -**

जइ चंदप्पहुदीणं वि ण अणुरूवदा तदो किं उवअरणं एदाए णिम्माणे (णं) विहिणा संपादिदं भवे।

(यदि चन्द्रप्रभृतीनामपि नानुरूपता तर्हि किमुपकरणमेतस्या निर्माणं विधिना सम्पादितं भवेत्)

**श्रीकृष्णः -**

वयस्य, सम्यगेतदाशंकितं भवता। [1]तदत्रैवं तर्कयामि। यथा-

**नैषा पद्मभुवा सुवर्णशकलैर्नो चम्पकानां कणैः,**
**सृष्टा काञ्चनकेतकीदललवैर्नो वा तडिल्लेखया।**
**नो चन्द्रेण न चाम्बुजेन ललनालीलाविलासावधिः,**
**किन्तु स्वीयमनोरथैकसुलभैर्भावैरभिज्ञायते।।४।।**

**विदू० -**

अहो दे कवोलकप्पणणिउणत्तणं।

---

१. ख – तत्रैवं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(अहो ते कपोल कल्पनानिपुणत्वम्)

**श्रीकृष्णः -**

(अनुध्यानं नाटयति)

**विदू०-**

भो वअस्स किं एदाए इत्थिआ चिंताए

(भो वयस्य, किमेतस्याः स्त्रियश्चिन्तया)

**श्रीकृष्णः-**

वयस्य, सत्यमाह भवान्-

**सा तु प्रिया न सुलभा ह्रदयन्तु तस्या-,**
**[1]मासक्तमेतदविचारपरं परन्तु।**
**लब्धावकाश इव मन्मथ एष पाप-,**
**श्चापं समानयति कर्णतटोपकण्ठम्।।५।।**

वयस्य, [2]दर्शनमपि प्रियाया दुर्लभमित्यनंगवेदनापनोदं प्रति निराशोऽस्मि।

**विदू० -**

वअस्स, जइ अहं ताए दंसणं तुह संपादेमि ता किमं पारितोसअं।

(वयस्य, यद्यहं तस्या दर्शनं तव सम्पादयामि तत्किं पारितोषिकम्)

**श्रीकृष्णः** - यद्भवतोऽभिमतम्।

**विदू०** - ता पेखदु भवं (तत् पश्यतु भवान्)

(इति चित्रफलकं दर्शयति)

---

१. ख– "मासक्त" नास्ति।
२. ख– दर्यपि ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**श्रीकृष्णः -**

(विलोक्य, सहर्षम्) वयस्य,

**अनेकसंकल्पविकल्पनाभि-,**
**र्विभाविता दिक्षु निरीक्षितापि।**
**नानन्दयत्यम्बुजलोचनेयं,**
**यथात्र चित्रे विनिभाल्यमाना।।६।।**

**विदू०-**

एवं खु चित्तकम्मणिउणदाए माहप्पं जं [1]चित्तंति ण आणीअदि, [2]अदो ज्जेव्व एदं चित्तं भणीअदि।

(एवं खलु चित्रकर्मनिपुणताया माहात्म्यं यच्चित्रमिति न ज्ञायते। अतएवेदं चित्रमिति भण्यते)

**श्रीकृष्णः -**

वयस्य, अदृष्टपूर्वं [3]खल्विदं पद्यमत्र दृश्यते।

**विदू० -**

केरिसं तं (कीदृशं तत्)

**श्रीकृष्णः -**

("कुमुदिनीं०....." त्यादिवाचयित्वा) अहो सर्वस्य निजप्रार्थनायामेव गरीयस्त्वबुद्धिः।

**विदू० -**

जुत्तं जेव्व ताए भणिदं जदो अणेअमहिलालंपडो खु तुमं।

---

१. ख – चित्ति।
२. ख – अदि।
३. ख – "ख" इति नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(युक्तमेव तया भणितं, यतोऽनेकमहिलालम्पटः खलु त्वम्)

**श्रीकृष्णः -**

वयस्य, परिहासछिद्रान्वेषी किल भवान्।

(चित्रे नायिकां निर्वर्ण्य) वयस्य, [1]महानयं मे संशयः।

**विदू० -**

केरिसो संसओ (कीदृशः संशयः)

**श्रीकृष्णः -**

कथयामि तावच्छ्रूयताम्-

**चन्द्रेण स्मितमाननं कमलतो नीलोत्पलैर्लोचने,**
**बाणैर्मानसजन्मनो[2] विरचिता एताः कटाक्षच्छटाः।**
**दन्ताः कुन्ददलैःकचा मधुलिहां वृन्दैस्तथा सन्त्वमी,**
**लावण्यं सकलांगसंगि तु कुतः सम्पादितं वेधसा।।७।।**

**विदू० -**

अहं उण जाणामि-

**विण्णाणं जेत्तिअं लोए तेत्तिओ ज्जेव्व संसओ।**
**उजुअस्स ण विण्णाणं ण संदेहो खणे खणे।।८।।?**

(अहं पुनर्जानामि-)

**विज्ञानं यावल्लोके तावदेव हि संशयः।**
**ऋजुकस्य न विज्ञानं न सन्देहः क्षणे क्षणे।।९।।**

**श्रीकृष्णः -**

तत्किमत्र भवानृजुतया मन्यते।

---

१. ख – महानयमत्र
२. ख – जन्मने

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विदू० -**

किं एत्थ जाणिदव्वं। लवणेसु दाव लावणं होइ लवणांइ उण समुद्दप्पहुदीसु होति। वा किं एत्थ दुल्लहत्तणं।

(किमत्र ज्ञातव्यम्, लवणेषु तावल्लावण्यं भवति, लवणानि पुनः समुद्रप्रभृतिषु भवन्ति। तत् किमत्र दुर्लभत्वम्)

**श्रीकृष्णः -**

(विहस्य) वयस्य एवंविधा मतिरेव दुर्लभा मादृशानाम् (पुनश्चित्रे नायिकाधरं निर्वर्ण्य) वयस्य, कथय तावदृजुबुद्ध्या किमेतदतिशोणमिति।

**विदू० -**

पढमं दाव तुमं कहेहि पछा अदहं कधइस्सं।

(प्रथमं तावत् त्वं कथय, पश्चार्दहं कथयिष्यामि)

**श्रीकृष्णः**-तर्हि श्रूयताम्-

**केचिद्विम्बमितीरयन्ति कवयः शोणं मणिं केचन,**
**प्रालेयद्युतिषोडशांशमरूणं प्राहुः परे पण्डिताः।**
**क़ान्ताया अधरं वयन्तु मधुरं जानीमहे कन्दलम्,**
**श्रृंगारस्य तरोः स्मरानुगतया रत्या रसेनोक्षितम्।।६।।**

**विदू०-**

वअ़स्स [1]सवामि बह्मसुत्तेन अधरोज्जेव्व एसो। तुमं उण णिअहिअअस्स राअदोसेन [2]असंभाविदं [3]जेव्व मण्णेसि। ता अलं एदिणा। मा दाव एदं सच्चाभामाए दिट्ठिगोचरं भवे।

---

१. ख – ववामि
२. ख – असंभावेदिव
३. ख – "जेव्व" इत्यारभ्य "चेटी च" इत्यन्तं नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(वयस्य, शपामि ब्रह्मसूत्रेण अधरमेवैतत्। त्वं पुनः निजहृदयस्य रागदोषेण असम्भावितमेव मन्यसे तदलमेतावता। मा तावदेतत्सत्यभामाया दृष्टिगोचरं भवेत्)

(ततः प्रविशति सत्यभामा चेटी च)

**सत्य० -**

हंजे केत्तिअं दाव दूरो अज्जउतो।

(हञ्जे, कियत्तावद्दूरं आर्यपुत्रः)

**चेटी -**

भट्टिणि एसो वउलवेदिआए [1]संनिहिदो ज्जेअ (अग्रतो भूत्वा) जअदु जअदु भट्टा एसा देवी सच्चभामा आअदा।

(भर्तृके, एषो वकुलवेदिकायां सन्निहित एव (अग्रतो भूत्वा) जयतु जयतु भर्ता एषा देवी सत्यभामा आगता)

**विदू० -**

(सचकितं चित्रफलकमाच्छाद्य) सोत्थिभोदीए (स्वस्ति भवत्याः)

**सत्य० -**

अज्ज वंदामि (आर्य, वन्दे)

**श्रीकृष्णः -**

(उत्थाय, करे गृहीत्वोपवेशयति) देवि, स्वाधीने जने नियोगमुपेक्ष्य किमित्ययमायासोऽंगीकृतः।

**सत्य० -**

अज्ज किल देवस्स हिअअं उव्विगं त्ति परिअणादो सुणिअ

---

१. ख –संगिहिदो

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दंसणुत्कंठिदाए ण को वि आआसो, विसेसुदो अज्जउत्तस्य दंसणेण। ता किं णाम उव्वेअकालणं।

(अद्य किल देवस्य हृदयमुद्विग्नमिति परिजनात् श्रुत्वा दर्शनोत्कण्ठिताया न कोऽप्यायासः। विशेषत आर्यपुत्रस्य दर्शनेन। तत् किन्नाम उद्वेगकारणम्)

**श्रीकृष्णः -**

देवि, शरदातपतापग्लानिरेषा नैसर्गिकीति न शंकास्पदम्।

**सत्य० -**

कुसलं दाव कुलदेवदानं[1] पसाएण होदु (इति करपल्लवेनांगानि परामृशन्ती विदूषकं प्रति) अज्ज मंडव्व किं एदं पुत्थअं विअ दीसदि।

(कुशलं तावत्कुलदेवतानां प्रसादेन भवतु (इति करपल्लवेनांगानि परामृशन्ती विदूषकं प्रति) आर्य माण्डव्य, किमेतत्पुस्तकमिव दृश्यते।

**विदू० -**

(चित्रफलकं मुहुर्मुहुराच्छाद्य) भोदि सामवेअ पुत्थअं खु एदं।

(भवति, सामवेदपुस्तकं खल्वेतत्)

**सत्य० -**

ता किं स ण पकासीअदि।

(तत् कि तन्न प्रकाश्यते)

**विदू० -**

ण हु इत्थिआणं वेअख्खराणि सुणावीअन्ति।
(न खलु स्त्रीणां वेदाक्षराणि श्राव्यन्ते)

---

१. ख – णं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सत्य० -**

(संज्ञया चेटीं निर्दिशति)

**चेटी -**

(विदूषकहस्तादाच्छिद्य चित्रफलकं देवीहस्ते ददाति)

**सत्य० -**

(गृहीत्वा उद्धाट्य दृष्ट्वा ''रामाःसन्ती'' त्यादि वाचयित्वा) अज्जउत्त, तुह एदाइं अख्खराइं (अन्यतो दृष्ट्वा) एदाइं उण कीए विलिहिदाइं (''कुमुदिनी'' त्यादि वाचयित्वा) ता अण्णं ज्जेव्व एदं दीसइ। अहं [1]उण वंचिदा अण्णवदेसेण।

((गृहीत्वोद्धाट्य दृष्ट्वा ''रामाःसन्ती'' त्यादि वाचयित्वा) आर्यपुत्र, तवैतान्यक्षराणि (अन्यतो दृष्ट्वा) एतानि पुनः कया विलिखितानि (''कुमुदिनी'' त्यादि वाचयित्वा) तदन्यदेवेदं दृश्यते। अहं पुनः वञ्चिताऽन्यापदेशेन)

**विदू० -**

भोदि एसो अणंगो रइसणाहो मए पिअवअस्सं अब्भत्थिअ लेहाविदो तधा मए ज्जेअ किदो सिलोओ वि।

(भवति, एषोऽनंगो रतिसनाथो मया प्रियवयस्यमभ्यर्थ्य लेखापितः। तथा मयैव कृतौ श्लोकावपि)

**सत्य० -**

जह अण्णसालाए दुरिट्ठमक्कड मधए णिक्खिवीअदि तह ज्जेव्व एदं (इत्युत्तिष्ठति)

(यथान्यशाखायाः दुष्टमर्कटो मध्ये निक्षिपति तथैवैतत् (इत्युत्तिष्ठति))

---

१. ख –उणा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्रीकृष्णः -

(सवैलक्षण्यं पादयोर्निपत्य)

निसर्गप्रेमपात्रेऽस्मिन् कदाप्यकृतवैकृते।
अलमाशंकया देवी मुञ्च कोपममुं प्रिये।।१०।।

चेटी-

भट्टिणि पाअपडिअं देअं उवेक्खिदुं ण दे जुत्तं।
(भर्तृके, पादपतितं देवमुपेक्षितुं न ते युक्तम्)

सत्य०-

अज्जउत्त तुह [1]चित्तदंसणे विघ्धं कुणंती अहं ज्जेव्व अवरज्झामि, तुह उण को अवराहो।

(आर्यपुत्र, तव चित्रदर्शने विघ्नं कुर्वती अहमेवापराद्धास्मि, तव पुनः कोऽपराधः)

(इति चेटीं गृहीत्वा निष्क्रान्ता)

श्रीकृष्णः -

(दीर्घमुष्णञ्च निःश्वस्य) अहो, रन्ध्रान्वेषण शीलता व्यसनोपनिपातानाम्। यतः, प्रियादर्शनोत्कण्ठाविनोदाय चित्रफलकव्यासंगं कर्तुं प्रवृत्ते मय्यकस्मादुपनिपतितोऽयं [2]देवीकोपान्तक इति तद् वयस्य किमिदानीं कर्तव्यमिति विमूढोऽस्मि।

विदू० -

वअस्स णं अहमाणं भाअधेएण देवीए [3]एदं चित्तफलअं ण पाडिदं। ता एदं अंवलोअअंतो सुहं चिट्ठदु पिअवअस्सो।

---

१. ख – चित्तदंसणं

२. ख – "दपनिपतितोऽयं दे" इत्यस्य स्थाने "दुपतितो" मात्रमुपलभ्यते।

३. ख – काएदं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(वयस्य, नन्वस्माकं भागधेयेन देव्या एतत् चित्रफलकं न पातितम्। तदेतदवलोकयन् सुखं तिष्ठतु प्रियवयस्यः)

**श्रीकृष्णः -**

सदैव [1]सुलभसुखो देवानां प्रिय खलु भवान्।

**विदू० -**

ता किं तुमं ण देवाणंपिओ।

(तत्किं त्वं न देवानांप्रियः)

**श्रीकृष्णः -**

वयस्य, किमत्र सन्देहेन, फलत एव, तावत् पश्यतु भवान्। यतः-

**दर्शनं दुर्लभं तस्या दूरादेव समागमः।**

**सुलभा मन्मथोन्माथव्यथादेवी रुषस्तथा।।११।।**

तदेहि देवीं प्रसादयितुमन्तःपुरमेव प्रविशावः।

(इति निष्क्रान्तौ)

(ततः प्रविशति प्रियव्रता)

**प्रिय० -**

कहिं खु सुमदिआ दट्ठव्वा (परिक्रम्यावलोक्य च) एसा सुमदिआ इदो ज्जेव्व आअछंदि।

(कुत्र खलु सुमतिका द्रष्टव्या (परिक्रम्यावलोक्य च) एषा सुमतिका इत एवागच्छति।

(ततः प्रविशति सुमतिका)

---

१. ख – सुलभं सुखो।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सुम० -**

(पुरोऽवलोक्य प्रियव्रतां दृष्ट्वा) सहि पिअव्वदे कहिं पट्ठिदासि।

(सखि प्रियव्रते, कुत्र प्रस्थितासि)

**प्रिय० -**

सहि तुमं [1]ज्जेअ दट्ठुं पट्ठिदह्मि।

(सखि त्वामेव द्रष्टुं प्रस्थितास्मि)

**सुम० -**

साहीणस्स वि जणस्स दंसणे कित्ति आआसः।

(स्वाधीनस्यापि जनस्य दर्शने किमित्यायासः)

**प्रिय० -**

कज्जगोरवं खु साहीणे वि तुवरावेदि।

(कार्यगौरवं खलु स्वाधीनेऽपि त्वरयति)

**सुम० -**

सहि ता कहेहि तं कज्जं।

(सखि, तत्कथय तत्कार्यम)

**प्रिय० -**

(सुमतिकां हस्ते गृहीत्वा) सहि, एदाए केसरतरुवेदिआए उववविसह्म (इत्युपविश्य) सुमदिए अवहिदा भविअ सुणु।

(सुमतिकां हस्ते गृहीत्वा) सखि, एतस्यां केशरतरुवेदिकायामुपविशावः (इत्युपविश्य) सुमतिके, अवहिता भूत्वा श्रृणु)

---

१. ख – ज्जेअं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सुम० -**

अवहिदह्मि कहेदु पिअसही।

(अवहितास्मि, कथयतु प्रियसखी)

**प्रिय०-**

अज्ज किल पसणमुहीए भअवदीए अहं संदिट्ठा जहा पिअव्वदे अहं सच्चभामासआसं गच्छमि तदो तुए सुमदिआ मह वअणेण भणिदव्वा जह अज्ज [1]पदोसे सच्चभामा कमलाए [2]अच्चणणिमित्तं गमिस्सदि तदो णिअसोहग्गपत्थणावसरे तुए अग्गदोज्जेव्व देवी पुट्ठदो अवट्ठिदाए साणुणासिअं भणिदव्वा जहा पुत्ति सच्चभामे जइ विसभाणुसुदंराहिअं मह अवदारभूतं माहवेण परिणाअइस्ससि तदो तुह सोहग्गं वट्टिस्सदि अण्णहा विपरीदं भविस्सदि [3]त्ति।

(अद्य किल प्रसन्नमुखया भगवत्या अहं सन्दिष्टा यथा-प्रियव्रते अहं सत्यभामासकाशं गच्छामि ततस्त्वयां सुमतिका मद्वचनेन भणितव्या यत्-अद्य प्रदोषे सत्यभामा कमलाया अर्चननिमित्तं गमिष्यति तदा निजसौभाग्य प्रार्थनावसरे त्वया अग्रत एव देवीपृष्ठतोऽवस्थितया सानुनासिकं भणितव्या यत् "पुत्रि सत्यभामे, यदि वृषभानुसुतां राधिकां ममावतारभूतां माधवेन परिणयिष्यति तर्हि तव सौभाग्यं वर्धिष्यते, अन्यथा विपरीतं भविष्यती" ति।

**सुम०-**

(सभयविस्मयम्) सहि पिअव्वदे अदि साहसं खु एदं भअवदीए अणत्तं।

(सखि प्रियव्रते, अतिसाहसं खल्वेतद् भगवत्या आज्ञप्तम्)

---

१. ख – "पदोसे" इत्यस्य स्थाने" पदो अवट्ठिदाए साणुणासिअं भणिदसे" इति खपाठः।

२. ख – अं मणिदव्वाच्चरण।

३. ख – "हि अंमह अवदारभूतं माहवेण पा" इत्यधिकः पाठः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्रिय०-**

सहि ण [1]किंपि एत्थ अच्चाहिदं भअवदी उण तत्थ संणिहिदा सव्वं णिव्वहिस्सदि।

(सखि, न किमप्यत्रत्याहितम्। भगवती पुनः तत्र सन्निहिता सर्वं निर्वर्तयिष्यति)

**सुम०-**

जधा भअवदी आणवेदि।

(यथा भगवत्याज्ञापयति)

**प्रिय०-**

ता अग्गदो गच्छदु पिअसही अहं उण भअवदीसआसं गछामि।

(तदग्रतो गच्छतु प्रियसखी, अहं पुनर्भगवतीसकासं गच्छामि)

(इति निष्क्रान्ते)

**।। मिश्रविष्कम्भकः।।**

**(ततः प्रविशति साधुव्रता)**

**साधु०-**

दिष्ट्या सम्प्रति तटस्थतयैव महोल्वण प्रकृतिरपि सत्यभामा [2]मायया [3]मयोपायनिरुद्धविरुद्धव्यापारतया स्वसमीहितं राधामाधवपरिणयमंगीकारिता तदिदानीं विगलितचिन्ताभारतया विश्रान्तमिव मे हृदयम्। आदिष्टा च मया प्रियव्रता [4]यथाऽमुनोदन्तेन माधवसुहृदं विजयनन्दमानन्दयेति।

(ततः प्रविशति प्रियव्रता)

---

१. ख – वि।
२. ख – माया।
३. ख – निरूध्दा।
४. ख – पयथा।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्रिय०-**

कधिदो मए विजअणंदस्स वुत्तंतो जाव भअवदीए णिवेदिमि (इति परिक्रम्यवलोक्य च) एसा भअवदी मं ज्जेव्व पडिवालअंती चिट्ठदि (उपसृत्य) जेदु भअवदी।

(कथितो मया विजयनन्दस्य वृत्तान्तः। यावद् भगवत्यै निवेदयामि (इति परिक्रम्यावलोक्य च) एषा भगवती मामेव प्रतिपालयन्ती तिष्ठति (उपसृत्य) जयतु भगवती)

**साधु०-**

प्रियव्रते, कच्चिदावेदितस्त्वया विजयनन्दाय पौर्वदिवसिकः प्रदोषवृत्तान्तः।

**प्रिय०-**

अह इं (अथ किम्)

**साधु०-**

तत्कथय, श्रुत्वा किमसाववादीत्।

**प्रिय०-**

तदो हरिसफुल्ललोअणो [1]भअवदीं पणमिअ पिअव्वदे किं एत्थ अच्चरिअं जं णिअजणरख्खणं एआरिसं भअवदी करेदि जदो सअल भुअण रख्खणणिमित्तं जेव्व [2]एवंविधानं णिम्माणं ति भणिअ पारितोसिअं दाउं पउत्तो मए भणिदो विवाहे णिवुत्ते एदं गेहिणस्संत्ति तदो माहवसआसं गदुअ वुत्तंतं णिवेदिअ भअवदीदंसणं करिस्सं ति भणिअ पट्ठिदे तस्सिं अहं भअवदीसआसं आअदेत्ति।

(ततः हर्षप्रफुल्ललोचनो भगवतीं प्रणम्य "प्रियव्रते, किमत्राश्चर्यम्,

---

१. ख – मअवन्दि।
२. ख – विधाणं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यन्निजजनरक्षणमेतादृशं भगवती करोति। यतः, सकलभुवनरक्षण-निमित्तमेवैवंविधानां निर्माणमि" ति भणित्वा पारितोषिकं दातुं प्रवृत्तो मया भणितो "विवाहे निवृत्त एतद् ग्रहीष्यामी" ति, ततो "माधवसकाशं गत्वा वृत्तान्तं निवेद्य भगवतीदर्शनं करिष्यामी" ति भणित्वा प्रस्थिते तस्मिन् अहं भगवतीसकाशमागतेति।

**साधु०-**

तदेहि, तावदाह्निकसम्पादनाय गच्छावः (इति निष्क्रान्ते)

(ततः प्रविशति विजयनन्दः)

**विजय०-**

श्रुतं मया माधवप्रवृत्त्युपलम्भाय नियुक्तस्य माण्डव्यस्य मुखात् यथा किल "चित्रफलकदर्शनकुपितायाः सत्यभामायाः प्रसादनायान्तःपुरगतो माधवस्तत्रैवाहःशेषं गमयिष्यती"[1]ति। विलसति चायमस्तमस्तकविन्यस्तसमस्त गभस्तिविसरो वासरमणिः। तदिदानीं प्रियाव्रतावेदितोदन्तनिवेदनेनानन्दयितुं माधवान्तिकमेव गच्छामि (इति परिक्रम्यावलोक्य च) अये, कथमचिरादेव-

**यत्पूर्वं विशदं व्यलोकि मलिनं तद्दृश्यते तत्क्षणात्।**
**किं स्थाणुः पुरुषोऽथवेति विशयं लिंगञ्च नास्कन्दति।**
**नीचोच्चादिविवेकविक्लवतया [2]सर्वं समं पश्यतो।**
**लोकस्यायमकाण्डपंगुकरणो जातोऽन्धकारोदयः।।१२।।**

अपिच–

**आदौ रासभरोमरोजिरुचिरच्छायं ततो धूमिका**
**तुल्यायं तदनु स्फुरत्करिघटासंघट्टदृष्टोपमम्।**

---

१. ख – "ति" नास्ति।
२. ख – सर्वं सर्वं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**पश्चादञ्जनपुञ्जमञ्जुरभसादद्वैतमुद्भावयन्।**

**मुष्टिग्राह्यमहो महोन्नतमिदं ध्वान्तं समुज्जृम्भते।।१३।।**

(विचिन्त्य) अहो, निखिलजन व्यवहार परिपन्थिता माचरदपीदमन्धतम ससमुद्भूतमदनानामिन्दुवदनानां प्रियाभिसार सौकर्यसम्पादनेनानुकूलता-मावहति। तथाहि सम्प्रति ललनाः-

**मृगमदकृतांगरागा रागावेगेन नीलमणिहाराः,**

**असितांशुकपरिवीता वीताशंकं व्रजन्ति चित्तेशम्।।१४।।**

(ऊर्ध्वमवलोक्य) अहो [1]शरन्निर्मलीयकमम्बरतलस्य। अपिच-

**विलसति सलिलं सुरापगाया,**

**घनघनसारनिभं नभस्यमुष्मिन्।**

**धृतमिव शरदा निजानुरूपं,**

**जघनतटे नवदाममालतीनाम्।।१५।।**

(परिक्रम्यावलोक्य च) अये, प्रत्यासन्न इव चन्द्रोदयो लक्ष्यते। तथाहि-

**आसन्नसूनप्रसवालतेव समागमिष्यन्नृपतिः सभेव।**

**अवाप्तगर्भा वरसुन्दरीव पौरन्दरी दिक् पुरतश्चकास्ति।।१६।।**

अपि चेदानीम्-

**शाणग्रावनिभे नभस्तल इह स्वर्णस्य रेखा इव,**

**प्रादुष्यन्ति कलानिधेरुदयतः सूक्ष्मा मयूखांकुराः।**

**चञ्चूचञ्चलताजुषश्च परितः पुष्णन्ति मोदं मुहुः,**

**तद्ग्रासस्पृहयालवश्चिरतरोत्कण्ठाश्चकोरा इमे।।१७।।**

---

१. ख – निर्मलीकृतस्य।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तदिदानीं प्रायेण प्रमदवनमध्यगते केलिकैलाशे माधवेन भवितव्यं (इति परिक्रम्य, अवलोक्य च) अये, सोऽयमस्मन्नयना[१]मृतासारः संसारसारः [२]सारससरसलोचनो [३]भगवान् देवकीनन्दनः सह माण्डव्येन केलिकैलाश-शिखरमलंकरोति। य एषः-

**अनंगशरवेदनाकलितमेतदंगं निज-,**
**प्रभामुषिततानवं [४]परमसुन्दरं धारयन्।**
**[५]प्रजागरभरानमत्समुदयन्निमीलालसा,**
**कुलस्तिमितलोचनः प्रियतमामनुध्यायति।।१८।।**

(ततः प्रविशति यथानिर्दिष्टो माधवः विदूषकश्च)

**माधवः-**

(समन्तादवलोक्य) वयस्य, नूनमयं विजयनन्द इत एवाभिवर्तते। तदेनमवतीर्य [५]सत्वरं समानयतु भवान्।

**विदू०-**

जं आणवेदि देव (यदाज्ञापयति देवः)

(इत्युत्तिष्ठति)

**विजय०-**

(श्रुत्वा) अये, विदितोऽहं देवस्य।

[६]तद् यावदुपसर्पामि (इत्युपसृत्य) जयतु जयतु यदुनाथः।

---

१. ख – न्नमृतासारः
२. ख – ससलोचनो।
३. ख – भगवा।
४. ख – भ्रमत्सुन्दरं।
५. ख – प्रजार।
६. ख – तं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**माधवः-**

(विलोक्य) सखे विजयनन्द, स्वागतं भवतः, इत आस्यताम्।

**विज०-**

(उपविशति)

**माधवः-**

वयस्य, विचित्रोऽयमुद्गमनक्रमः कलानिधेः। तथाहि-

**सिन्दूरामलविन्दुरिन्दुरुदयन्निद्रागनाया दिशो,**
**भालेऽभादथ तच्छिरस्ययमहो जाम्बूनदालंकृतिः।**
**जातीगुच्छ इवाथ केशनिचये [1]तस्या इदानीं पुनः,**
**स्वच्छादर्श इवामुपाकरधृतो देदीप्यते सर्वतः।।१६।।**

**विदू०-**

वअस्स कित्ति दाव एसो हरिणो चंदेण धारिज्जदि।
(वयस्य, किमिति तावदेषो, हरिणश्चन्द्रेण धार्यते)

**माधवः-**

(विहस्य) श्रृणु तावदत्र कारणम्।

**विदू०-**

कहेदु भवं (कथयतु भवान्)

**माधवः-**

**तन्वंग्या वदने विलोक्य सुषमां दृक् कृष्णसारार्जिता-**
**मिन्दुस्तां स्पृहयालुरेष [2]हरिणं धत्तां मृगांकच्छलात्।**

---

१. ख – तास्या।
२. ख – हरिणां।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**कर्णोपान्तविसर्पणैर्मनसिजस्योल्लासनैर्या पुनः,**
**विच्छित्तिर्मुखपंकजे न खलु तां प्राप्नोति तेनाप्यसौ।।२०।।**

**विदू०-**

तुमं क्खु महिलालंपडो कवोलकव्वणाए णिउणो ता अहं वि कवोलकव्वणाए चंदिअ वण्णइस्सं।

**चंदो चंदनकुच्चएहि [1]भुअणं लिंपेइताणं कणा,**
**उद्धं संपडिअ फ्फुरंति गअणे णख्खत्तणामं किदा।**
**पिंडीहूअ महीअले [2]णिवडिदो जस्सिं पदेसे रसो,**
**तं लोओ कुमुदाअरोत्ति सअलो जंपेइ णं अज्जुओ।।२१।।**

(त्वं खलु महिलालम्पटः कपोलकल्पनायां निपुणः तदहमपि कपोलकल्पन या चन्द्रं वर्णयिष्यामि-

**चन्द्रश्चन्द्रनकुञ्चकैर्हि भुवनं लिम्पति तदीयाः कणा,**
**रूर्द्ध्वं सपतिताः स्फुरन्ति गगने नक्षत्रनामांकिताः।**
**पिण्डीभूय महीतले निपतितो यस्मिन्प्रदेशे ह्यसौ,**
**तं लोकः कुमुदाकरस्तु सकलः प्रत्येति नन्वर्जुकः।।२२।।**

**माधवः-**

वयस्य,-अश्रुतपूर्वमेतद्वर्णनम्।

**विदू०-**

वअस्स परमत्थं वि वण्णइस्सं।
(वयस्य, परमार्थमपि वर्णयिष्यामि)

**माधवः-**

व्रूहि कीदृशं तत्।

---

१. ख – भुवणां।
२. ख – णवडिदो।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विदू०-**

**सोहइ [1]पुण्णमिआंकं णख्खत्ताणं गणें हि णहफलअं।**

**सौहअलं ललआणं मुहेंहि मुत्ताणं हारेहिं।।२२।।**

**(शोभते पूर्णमृगांकं नक्षत्राणां गणैर्नभःफलकम्)**

**सौधतलं ललनानां मुखैर्मुक्तानां हारैः।।**

**माधवः-**

वयस्य, सार्वपथीना ते बुद्धिः (मदनबाधां निरूप्य) हंहो मदन, निर्लज्जतया दुर्वारोऽसि।

यतः-

**पुरा पुरन्दराज्ञया चराचरस्य कारणम्**

**पुरारिमाद्ययोगिनं शरस्य लक्ष्यतां नयन्।**

**तदीयभाललोचनत्विषासि भस्मतां गत-**

**स्तथापि दुष्ट चेष्टसे किमन्यदस्ति शासनम्।।२३।।**

**विज०-**

[2](स्वगतम्) अये, गाढं स्मरशराहतमस्य हृदयमनेनोपन्यासेन तर्कयामि। तदानन्दयामि तावदेनं प्रियोदन्तनिवेदनेन (प्रकाशम्) वयस्य, कोऽयमभिषंगो नाम भवादृशमप्यास्पदीकरोति।

**माधवः-**

सखे विजयनन्द, सत्यमात्थ-

---

१. क – मिअकं।

२. क – खयोरुभयत्र "स्वगतं" नास्ति, आवश्यकं तु तत्।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**परन्तु [1]वस्तुमाहात्म्यं न कश्चिदतिवर्तते,**
**चन्द्रोदयेऽतिवेलत्वमुपयाति महोदधिः।।२४।।**

किञ्च सखे,

**मनोभवोऽयमनलस्तर्क्यते कथमन्यथा।**
**आश्रयाशे (आश्रित्य यो) न नष्टश्च रुद्रलोचन बह्निना।।२५।।**

**विज०-**

मा तावदनुकूलतामाचरन्नयमेवं देवेनोपालब्धुमर्हः।

**माधवः-**

(सवितर्कम्) किमेतन्मुग्धमनसं मामालक्ष्य समाश्वासनमिव करोति भवान्।

**विज०-**

(विहस्य) कथमद्यापि समाश्वासनं नाम।

**माधवः-**

तत्पायय तावत् श्रवसी श्रवणामृतम्।

**विज०-**

कर्णे ''एवमेवमि'' ति कथयति।

**माधवः-**

(श्रुत्वा सहर्षं विजयनन्दमालिंग्य) वयस्य, न खल्वेवंविध प्रियोदन्तनिवेदनादन्यत्र भवतः पारितोषिकमाकलयामि।

**विज०-**

वयस्य, नैवं भवान् वक्तुमर्हति[2]। यतः-

---

१. ख – "वस्तु" नास्ति।
२. ख– मर्हसि

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**आसारो घनसारसारपयसां पाटीरपंकाप्लवः।**
**पीयूषाद्भुतवर्षणं स्फुरदुरुब्रह्माबोधोऽपि वा।**
**एते यस्य शतांशतोऽपि न समास्तस्मिंस्त्वदालिंगने।**
**सर्वानन्दनिधौ किमस्ति भुवने यत्प्रार्थनीयं भवेत्।।२६।।**

**माधवः-**

वयस्य, अलमनया शंकया। न खल्वावयोः परितोषो [1]भिद्यते।

**विदू०-**

मए उण पदमं ज्जेव्व भणिदं जहशिघ्धं एदाए कण्णआए समागमो दे हुविस्सदित्ति। ता मह पारितोसिअं धारेदि देवो।

(मया पुनः प्रथममेव भणितं यशाशीघ्रमेतया कन्यकया ते समागमो भविष्यतीति। तन्मम पारितोषिकं धारयति देवः)

**माधवः-**

(विहस्य) एतत्ते पारितोषिकम् (इति कटकहारादिकमर्पयति)

**विदू०-**

(सहर्षम्) एसो दानीं दंसणिज्जो संवुत्तो (इति नृत्यति)

(एष इदानीं दर्शनीयः संवृत्तः (इति नृत्यति))

**माधवः-**

(चन्द्रिकोत्कर्षं निर्वण्य विजयनन्दं प्रति)

वयस्य, सम्प्रति खलु तर्कयामि-

**हारहीरमणि- [2]मण्डनाञ्चिता,**
**मालतीकुसुमगुम्फितालकाः।**

---

१. ख – भिद्येते।
२. क – चन्दना।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**चन्दनद्रवकृतानुलेपना,**
**नायकानभिसरन्ति नायिकाः।।२७।।**

**विज०-**

वयस्य, सत्यमिदं यच्छुभोदयः शुभान्येव प्रसञ्जयतीति। तथाहि-

**ध्वस्तं [१]ध्वान्तकदम्बकं निजकरैराशामुखानि स्फुटम्,**
**निर्मृष्टानि चकोरवृन्दमखिलं संतर्पितं ज्योत्स्नया।**
**मानम्लानिरपाकृता मृगदृशां कामः समुल्लासित-**
**श्चन्द्रेणोदयता न कस्य भुवने भद्राय भव्योदयः।।२८।।**

**माधवः-**

वयस्य, तदहमप्यचिरप्रसादितां देवीमनेन चन्द्रिकोत्कर्षवर्णनेनानन्दयितुं अन्तःपुरमेव प्रविशामि।

(इति निष्क्रान्ताः सर्वे)

**इति तृतीयोऽङ्कः**

---

१. "ध्वान्तकदम्बकं" इत्यस्य स्थाने "धातकं" इतिख पाठः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ।। चतुर्थोऽङ्कः ।।

(ततः प्रविशति कञ्चुकी)

कञ्चुकी-

(सविषादमात्मगतम्) अहो [1]दुःखानुबन्धिता विषयाणाम्। तथाहि-

बृद्धत्वे वृषभानुना निजकुले सन्तानमन्विच्छता,
देवीमम्बुरुहासनां व्रतभरैराराध्य यासादिता।
सेयं सर्वगुणाभिरामजनुषा पित्रोः सदानन्दिनी,
नीता कृष्णनिरीक्षणस्य [2]मिषतः [3]पञ्चेषुणा लक्ष्यताम्।।१।।

तथाहि-

मुग्धे गोपवधू मुखाम्बुजवनव्यालोलनेत्रस्य [4]किम्।
कृष्णस्य व्यसनेन मानसमिदं तूर्ष्णी समायास्यते।
इत्याकर्ण्य सखीवचः सपुलकं बाला सखीमाह ताम्।
आलि व्याहर नन्दनन्दनकथामेतां पुनः सादरम्।।२।।

अपिच-

कस्तूरीपंकमंगे कलयति बहुशो नीलकञ्जालिमाला-
जालं सानन्दमुद्यत्पुलकभुजलतालिंगिनं[5] सन्तनोति।
भूषामत्यन्तहृद्यां मरकतमणिभिः कल्पितां मन्यतेऽसौ,
पीते वासस्यतीव प्रथयति च रुचिं हन्त कृष्णानुरागात्।।३।।

---

१. ख – दुःखानुबन्धता।
२. ख – विषतः
३. ख – पञ्चेषाणात्व।
४. ख – विं
५. ख – लितं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

इदानीन्तु-

**आहारे कुरुते मनागपि मनो नालीगणैः प्रार्थिता-**
**प्याचष्टे कथमप्यहो न बहुशः पृष्टापि हृद्वेदनाम्।**
**दीर्घोच्छ्वासपरम्पराभिरभितः सन्तापयन्ती मुहुः,**
**सन्तप्तं परमाधिना निजजनं शून्येक्षणं ध्यायति।।४।।**

(पुरोऽवलोक्यसहर्षम्) नूनमनुकूलमिदानीं दैवमाकलयामि, यतोऽस्मदपेक्षितदर्शना [1]सुमतिकेयमित एवाभिवर्तते।

(ततः प्रविशति सुमतिका)

**सुमतिका-**

(सत्वरं परिक्रम्य, अन्तःपुरद्वाराभिमुखमवलोक्य) एसो विनदकंधरो कंचुई चिट्ठदि, ता पुछिस्सं दाव णं राधिआए वुत्तंतं (उपसृत्य) अज्ज विनदकंधर [2]कहेहि राधिआए वुत्तंतं।

(संत्वरंपरिक्रम्य, अन्तःपुर द्वाराभिमुखमवलोक्य) एषो विनतकन्धरः कञ्चुकी तिष्ठति। तत्पृच्छामि तावदेनं राधिकाया वृत्तान्तम् (उपसृत्य) आर्य विनतकन्धर, कथय राधिकाया वृत्तान्तम्)।

**कञ्चुकी-**

("आहारे कुरुते" इत्यादि पुनः पठति)

**सुम०-**

अह्महे अदिभूमिं गदो क्खु एदाए अहिणिवेसो।

(अम्भो, अतिभूमिं गतः खल्वस्या अभिनिवेशः)

---

२. ख – सुतसुतातिकि।
१. ख – करेइ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**कञ्चुकी-**

इदानीमेव प्रियदर्शनया सुमंतिकामाकारयितुं कञ्चिदादिदेशेति नियुक्तोऽहं प्रतीहारभूमिमुपागतमात्र एवाभिमुखागतां भवतीमालोकितवान्।

**सुम०-**

ता जाव एदं भअवदीए कमलाए पादोदअं [1]राधिआए उवणेमि (इति परिक्रामति)

(तद्यावदिदं भगवत्याः कमलायाः पादोदकं राधिकायै उपनयामि (इति परिक्रामति))

**कञ्चुकी-**

इतश्चित्रशालां प्रविशतु [2]भवती। राधिकां द्रष्टुमहमपि स्वनियोग-माचरामि। (इति निष्क्रान्तः)

(ततः प्रविशति विरहातुरा तल्पमधिशयाना राधिका प्रियदर्शना च)

**राधिका-**

**दिट्ठे कन्हमुहे वहेइ मअणो रोस्राउलं माणसं,**
**चंदो चंदणसीअलोवि [3]तवणो जादो कुदो भीसणो।**
**हारो मालइ [4]णिम्मिदो विहिअए [5]संधारिदो कीसमं,**
**संदावेदि ण वल्लवी जणउलं एसो त्थि मे संसओ।।५।।**

---

१. ख – राभि।
२. ख – भवति।
३. ख – तणो।
४. ख – णिम्भिदे।
५. ख – संधरिदो।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(दृष्टे कृष्णमुखे वहामि मदनं रोषाकुलं मानसम्,
चन्द्रश्चन्दनशीतलोऽपि तपनो जातः कुतो भीषणः।
हारो मालतिनिर्मितोऽपि हृदये संधारितः कीदृशं,
सन्तापयति न वल्लवीजनकुलं एषोऽस्ति मे संशयः।।५।।)

**प्रिय०-**

कित्ति दाव चंदमणी विअ [1]हीरमणी वि चंदोदये ण पज्झरदि तारिसं जेव्व एदं (सुमतिकामालोक्य राधिकां प्रति) सहि एसा सुमदिआ समाअदा।

(किमिति तावत् चन्द्रमणिरिव हीरमणिरपि चन्द्रोदये न प्रस्रवति तादृशमेवैतत् (सुमतिकामालोक्य राधिकां प्रति) सखि एषा सुमतिका समागता)

**राधिका-**

(प्रियदर्शनामावलम्ब्योत्थाय) साअदं सुमदिआए (स्वागतं सुमतिकायाः)

**सुम०-**

एदं क्खु साधुव्वदाए पेसिदं कमलाए पादोदअं

(एतत्खलु साधुव्रतया प्रेषितं कमलायाः पादोदकम्)

**राधिका-**

(सादरं प्रणम्यादायोपस्पृश्य) सुमदिए गुरुअणस्स आआसआरी अअं जणो अवरझ्झदि। (सुमतिके, गुरुजनस्यायासकारी अयं जनोऽपराध्यति)

**सुम०-**

एसो क्खु [2]अवराहो भअवदीं सुहावेदि जेण सअलमहीमंडणे माहवे अहिलासं धारेसि।

---

१. ख – पुस्तके – "हीरमणी विचंदोदयण पइ" इत्यस्य स्थाने "ए संधारिदो तदए" इति पाठ उपलभ्यते।

२. ख – "अवराहो" इत्यारम्य "भअवदीए" इत्यस्य मध्यगतः पाठः ख पुस्तके नोपलभ्यते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(एष खल्वपराधो भगवत्यै रोचते येन सकल महीमण्डने माधवेऽभिलाषं धारयसि)

**राधिका-**

(सलज्जं तिष्ठति)

**सुम०-**

हला पिअदंसणे भअवदीए साधुवदाए आणत्तं जहा कमलुज्जाणे सोहग्गदेवदाराधणणिमित्तं राधिअं चंदप्पमं अ गेण्हिअ आअछसुत्ति।

(हला प्रियदर्शने, भगवत्या साधुव्रतया आज्ञप्तं यथा कमलोद्याने सौभाग्यदेवदाराधननिमित्तं राधिकां चन्द्रप्रभां च गृहीत्वा आगच्छेति)

**प्रिय०-**

[१](सप्रणामम्) जं आणवेदि भअवदी।
(यदाज्ञापयति भगवती)

**राधिका-**

हला [२]पिअदंसणे [३]गुरुअणं अपुछिअ कधं गमिस्सामो।
(हला प्रियदर्शने, गुरुजनमनापृच्छ्य कथं गमिष्यामः)

**सुम०-**

कधिदं किल एदं भअवदीए पदमं जेव्व देवीए गुणवदीए।
(कथितं किलेदं भगवत्या प्रथममेव देव्यै गुणवत्यै)

**प्रिय०-**

ता ण किं वि एत्थ विचारणिज्जं।
(तन्न किमप्यत्र विचारणीयम्।)

---

१. ख – सणामं।
२. ख – दंसणो।
३. ख – गुरुआणं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सुम०-

ता चंदप्पभं [1]गेन्हिअ लहु गमिस्सामो।
(तच्चन्द्रप्रभा गृहीत्वा लघु गमिष्यामः)
(इति सर्वा निष्क्रान्ताः)
(ततः प्रविशति साधुव्रता)

साधु०-

(दिनवेलां निरीक्ष्य स्वगतम्) अये, अर्द्धयामावशेषो दिवसस्तत्कथं राधिकाचन्द्रप्रभयोरानयनाय प्रेषिता चिरयति सुमतिका। प्रियव्रता च कमलालये माधवप्रेषणाय [2]प्रहिता (पुरोऽलोक्य) एषा प्रियव्रता इत एवाभिवर्तते। तदेनां राधिकां त्वरयितुं आदिशामि। यतः परिहरणीया [3]यक्षराछसबहुला [4]सान्ध्यामुहूर्तवेला (ततः प्रविशति प्रियव्रता)

प्रिय०-

(परिक्रम्यावलोक्य च) एसा भअवदी मं जेव्व पडिवालअंती चिट्ठदि ता उवसप्पामि (उपसृत्य) जअदु भअवदी।

(परिक्रम्यावलोक्य च) एषा भगवती मामेव प्रतिपालयन्ती तिष्ठति तदुपसर्पामि (उपसृत्य) जयतु भगवती)

साधु०-

प्रियव्रते, कच्चित् प्रेषितस्त्वया कमलोद्याने माधवः।

प्रिय०-

अध [5]इं (अथ किम्)

---

१. ख – "ता ण किंवि एत्थ विचारणिज्जं सुम. ता चंदप्पमं गेन्हिअ" इति पुनरूक्तम्।
२. ख – प्रतिहिता।
३. ख – साद्दसा।
४. ख – सन्ध्या।
५. ख – अधरं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**साधु०-**

तदहमाह्निकशेषं परिसमाप्य गच्छामि। त्वं पुनः सत्वरं राधिकामादाया-गच्छेति।

**प्रिय०-**

जं भअवदी आणवेदि (यद्भगवत्याज्ञापयति)

(इति निष्क्रान्ता साधुव्रता च)

(ततः प्रविशति यक्षः)

**यक्षः -**

(समन्तादवलोक्य) अहो परिणामरमणीयता शरत्समयदिवसस्य। तथाहि-गगनतलमध्यमध्यारूढे स्फुल्लिंगनिकरमिव किरणनिकुरम्बममितः किरति सवितरि, किन्नरेशनिदेशपारवश्यादलकातो लंकां प्रति प्रस्थितस्य मम, [1]दण्डकवनराजयो मयलाचलपरिसरारण्यभूमयो वा, सागरवेलाविपिन-नगनिकुञ्जनदीपुलिनानि वा, नातपग्लानतया तथा चक्षुःप्रीति[2]मुपजनयन्तिस्म, यथेदानीं परावृत्तस्य गुञ्जदलिपुञ्जमञ्जुकुसुममञ्जरीरजोराजिपिञ्जरी-[3]कृततलाः तपनतनयातरंगभंगलिंगितमन्दमारुतोल्लासितमालती कुसुमामोद-मोदमानमिलिन्दमाला[4]झांकारनिर्भरा [5]व्रजवृन्दावनभूमयः। यासु च सुरसार्थप्रार्थनापरवशो भगवानिन्दिरारमणो विहाय वैकुण्ठवासव्यसनितां, वसुमतीदयावंशवदो, वसुदेववनितायां देवक्यामवतीर्य, लोकोत्तर-कान्तिकमनीयमिन्द्रनीलमणिमयमिव, वल्लवीलोचनाञ्जनपुञ्जमिव, वृन्दावनतमालकन्दलमिव लीलया गोपकिशोररूपं दधानः, कुवलयदलदीर्घया

---

१. ख – दण्डकावनराजजायो।
२. ख – पिति।
३. ख – कृतला।
४. ख – भांकार।
५. क – वृंज।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दृशा दशनशून्यवदनार [1]विन्दस्मितैश्च व्रजसुन्दरीणामानन्दयन् हृदयानि विजहार। बाल एव च कंसप्रहितां स्तन्यं पाययितुं प्रवृत्तां राछसीं पूतनामचेतनामचीकरत। उपक्रान्तचारूचरणचंक्रमणश्च समानवयोभिः गोंपकिशोरैः सह वञ्चितवल्लवीलोचनो[2] नवनीतचौर्यमाचरन्, विविधं गोपांगनोपालम्भ कदर्थितया, प्रेमार्द्रहृदययापि कृत्रिमकोपपरुषया यशोदयया रज्जुवेणुविदलाभिस्त्रास्यमानः, स्वचरितमपह्नुवानो, भयमुकुलितलोचनः, कम्पितकरपल्लवं साश्रुपातं रोदितुं [3]प्रवृत्तः, तयापि वाष्पोत्पीडनिरुद्धकण्ठया सत्वरमादाय गाढ मालिंग्य चुम्बितकपोलः सभ्रूभंगमाभीरांगना-जनमालोचयाञ्चक्रे। क्रमेण चैवमतिक्रान्तशैशवो भगवान्-

**[4]सजलजलदनीलश्चञ्चलाचारुचैलः,**
**स्फुरदुरुवनमालः शेखरोद्भासिभालः।**
**सुललितशुकनाशः प्रोलसन्मन्दहासः,**
**कृतविविधविलासः काननं गाहते स्म।।६।।**

ततश्च-

**वृन्दं गवामभिनवांकुरमण्डितासु,**
**शैलोपकण्ठवनराजिषु चारयन्यः।**
**वेणुस्वनैः श्रुतिमनोहरणैर्न चित्रं,**
**गोपांगनाविगलितान्यकथा [5]व्यतानीत्।।७।।**

(परिक्रम्य पुरोऽवलोक्य) सेयं गोवर्द्धनगिरेः रमणीयोपत्यका-

**यत्र स्वीयमहोत्सवप्रतिहतिक्रुद्धेन जूंभारिणा,**
**संवर्त्ताम्बुदवृन्दवर्षणभरैः संत्रासिते गोकुले।**

---

१. क – विन्दा।
२. ख – लोचयोनो।
३. क – प्रवृत्ते।
४. ख – "जल" नास्ति।
५. ख –पद्यमिदं पूर्णं नोपलभ्यते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कृष्णो वामकनिष्ठया गिरिममुं गोवर्द्धनं धारयन्।
गोपाद्गोधनसंयुतास्तदुदरे प्रावेशयन् निर्भयम्।।८।।

ततश्च-

प्रतिकृतनिजविक्रियः सुरेशः,
समुदित[1]विस्मयविस्मृतापकारः।
अवनितलमवाप्य नम्रमौलिः,
स्तुतिशतमातनुते स्म चक्रपाणेः।।६।।

(पुनरग्रतो गत्वा, विलोक्य) इदं तद्रासलीलास्थानं यदुनन्दनस्य। अत्र हि भगवान् वासुदेवः-

लावण्यामृतवारिधिः[2] समुदयत्सौन्दर्यसारावधिः,
श्रृंगाराद्वयसर्गकौशलविधिः स्फूर्जत्कलानां निधिः।
कन्दर्पस्य जगज्जये प्रतिनिधिः सौख्यावलीसन्निधिः,
श्रीकृष्णो रमयाञ्चकार सरसा रासोत्सवेनांगनाः।।१०।।

तद्यावदिहावतीर्य [3]स्वावतरणकृतभूभारावतरणस्य भगवतः कंसारेः शिरः प्रणामेन कलेवरमिदं कृतार्थीकरोमि (इत्यवतीर्याञ्जलिं बद्ध्वा श्रीकृष्ण मनुध्यायन्) अनन्त व्रह्माण्डकोटिकल्लोलमाला जलनिधे-

भाराक्रान्तवसुन्धराकरूणया धात्रा सुराणां गणैः,
सार्द्धं क्षीरनिधेस्तटं प्रतिगतेनाभ्यर्थितः स्वां तनुम्।
यस्तत्कार्यचिकीर्षया यदुकुले देव्यामवातीतरद्,
देवक्यां जगदुत्सवैकनिधये कृष्णाय तस्मै नमः।।११।।

(इति साष्टांगपातं [4]प्रणम्योत्थाय [5]पुरोऽवलोक्य)

---

१. ख – "विस्मय" इति नास्ति।
२. ख – लावएणयामृतवाररिधि।
३. ख – स्वावतग।
४. ख – पाणम्य।
५. ख – पुरे।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अये,

**चन्द्रिकेव चमत्कारं चक्षुषोर्मम तन्वती।**
**लावण्यरसवापीव कापीयमभिलक्ष्यते।।१२।।**

(ततः प्रविशति चन्द्रप्रभा-प्रियदर्शना-सुमतिकाभिः परिवृता राधिका)

**राधिका-**

पिअदंसणे केत्तिअं दाव दूरं कमलालओ दाणीं हुविस्सदि।

(प्रियदर्शने कियत् तावद्दूरं कमलालय इदानीं भविष्यति)

**प्रिय०-**

णं एसो अग्गदो दीसयदे ज्जेव कमलालओ तुमं उण अणहिअअत्तणेण ण [1]पेक्खदि।

(नन्वेषोऽग्रतो दृश्यत एव कमलालयः। त्वं पुनरन्यहृदयतया न पश्यसि)

**राधिका-**

(सासूयम्) विवरीअं खु दे पिअदंसणे त्ति णामहेअं।

(विपरीतं खलु ते प्रियदर्शनेति नामधेयम्)

**प्रिय०-**

(सस्मितम्) पुव्वं दाव जधा तधा भोदु अज्ज उण फुडीहुविस्सदि पिअदंसणाए पिअदंसणत्तणं।

((सस्मितम्) पूर्वं तावद्यथा तथा भवतु अद्य पुनः स्फुटीभविष्यति प्रियदर्शनायाः प्रियदर्शनत्वम्)

**चन्द्र०-**

(सवितर्कं जनान्तिकम्) पिअदंसणे णूणं माहवे वि एत्थ आअदो हुविस्सदि त्ति जाणामि।

---

१. ख – पेख्खस ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(प्रियदर्शने नूनं माधवोऽपि अत्रागतो भविष्यती ति जानामि)

**प्रिय०-**

(सोपहासम्) जइ एव्वं ता [1]कित्ति विजअणंदो वि ण तक्कीअदि।

(यद्येवं तर्हि किमिति विजयनन्दोऽपि न तर्क्यते)

**चन्द्र०-**

(सलज्जस्मितम्) णूणं अत्तणे हिअअस्स च्छन्देन किं वि [2]असम्बद्धं [3]भणिदुं पउत्तसि।

(नूनमात्मनो हृदयस्य च्छन्देन किमपि असम्बद्धमेव भणितुं प्रवृत्तासि)

**प्रिय०-**

कज्ज साहणणिउणाणं खु परिअत्ताणं [4]असम्बद्धं जेव्व मानइदव्वं ता एहि लहु गच्छह्म (इति परिक्रामति)

(कार्यसाधन निपुणानां खलु परिजनानामसम्बद्धमेव मानयितव्यम्। तदेहि लघु गच्छामः)

(इति परिक्रामति)

**यक्षः-**

(समीपमुपसृत्य राधिकां निर्वर्ण्य) अहो मानुष्यकेऽप्यदृष्टपूर्वोऽयं रामणीयकातिशयः।

---

१. ख – किमिति।

२. ख – आस........।

३. क – पुस्तके – "मणिदुं पउत्तासि। प्रिय.–कज्जा साहणणिउ णाणं असम्बद्धं ज्जेव्व" इत्येतावानंशो नोपलम्यते।

३. ख – पुस्तके – असंबद्धं जेव्व मानइदव्व ता ए हि लहु गच्छह्म। यक्षः – (समीपमुपसृत्य राधिकां निर्वर्ण्य) "इति नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तथाहि-

रूपं न चैतदवलोकितपूर्वमस्याः,
कान्तिर्नकेनचिदियं तुलिता विभाति।
लावण्यमन्यदिव लोचनधन्यपुण्यं,
किं वांच्यमन्यदुदितं मदनस्य भाग्यम्।।१३।।

किञ्च-

कान्तिः स्याद्यदि चन्द्रमण्डल इयं [१]क्वास्ते कटाक्षच्छटा,
सा चेत्स्याद्वदने क्वचित्किमियता कान्तिस्तु सा दुर्लभा।
स्यादेतद्द्वितयं यदि [२]क्वचिदहो वाङ्माधुरीयं कुतः,
तत्सत्यं विधिरद्वितीयरचनाचातुर्यवारांनिधिः।।१४।।

अपि चेदं तर्कयामि, [३]तथा-

एतन्निर्मितिमाकलय्य विधिना संकल्पितामिंगितैः[४]।
नूनं सा कमला परोक्षपदवीमंगीचकार स्फुटम्।
नूनं सापि रतिः समस्तललनासाम्राज्यभंगाद्भिया।
रूपालोकनचातुरीविरहितं वव्रे विचार्या तनुम्।।१५।।

अभिनवागतयौवना चेयमभिलक्ष्यते। तथाहि-

कान्तिः क्वापि समुल्लसत्यनुदिनं [५]वक्त्रे तथा वक्रिमा।
नेत्रप्रान्तमुपैति मन्दमुदितं विम्बाधरेऽपि स्मितम्।
वक्षस्यंकुरितौ कुचौ कृतपदं मध्ये भवत्तानवम्।
तन्वंग्या जघने [६]घनत्वमुद्भूद्भाग्येन चेतोभुवः।।१६।।

---

१. क – कास्ते।
२. ख – चन्द्रमण्डत्क्वचिद्दो।
३. ख – यथा।
४. ख – भिङ्गितैः।
५. ख – व नास्ति।
६. ख – घनत्वमुपौदभूद।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तदियमंगनारत्नं निजसौन्दर्यतिरस्कृतकन्दर्पदर्पस्य युवराजस्य नलकूबरस्योपायनीकर्तुमर्हम्।

**राधिका-**

(पार्श्वतोऽवलोक्य) सहिओ एदस्सिं कुंज निउंजे देवदाराधणणिमित्तं कुसुमाइं अवचिणेह्म (इति निकुञ्जं प्रविशति)।

((पार्श्वतोऽवलोक्य) सख्य, एतस्मिन्कुञ्जनिकुञ्जे देवताराधननिमित्तं कुसुमानि अवचिनुमः (इति निकुञ्जं प्रविशति))

**यक्षः-**

अयमेनामपहर्तुमवसरः (इति सत्वरमुपसृत्य राधिकां स्कन्धे समारोप्य वेगेन गगनमुत्पतते[1])

**चन्द्र०-**

पिअदंसणे राधिआ ख्खु कुसुमाइं अवचिणे मिति[2] कुंजे पइट्ठा ता णं अनुसरह्म।

(प्रियदर्शने, राधिका खलु कुसुमान्यवचिनोमीति कुञ्जं प्रविष्टा। तत् नन्वनुसरावः)

(इति सर्वाः कुञ्जं प्रविशन्ति)

**प्रिय०-**

सहि चंदप्पभे ण हु एत्थ राधिआ दीसई

(सखि, चन्द्रप्रभे न खल्वत्र राधिका दृश्यते)

**चन्द्र०-**

[3](समन्तादवलोक्य) कधं खणमेत्तेण दूरं गदा एसा।

(कथं क्षणमात्रेण दूरं गतैषा)

---

१. ख पतेभि।

२. ख – ह्मिमति।

३. ख – समन्ततो विलोक्य।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सुम०-**

पिअदंसणे लहु दाव अण्णदो [1]अणेसीअदु।
(प्रियदर्शने, लघु तावदन्यत्रान्वेषयतु)

**प्रिय०-**

(सत्वरं कुञ्जान्तरमुपसृत्य) पिअसहि राधिए कहिंसि (प्रियसखि, राधिके, कुत्रासि)

**चन्द्र०-**

सहि राधिए ण जुत्तं खु दे एदाए वेलाए एरिसं वणसंचलणं ता निवत्तीअदु।

(सखि राधिके, न युक्तं खलु तवैतस्यां वेलायां ईदृशं वनसञ्चलनं, तन्निवर्त्तस्व)

**सुम०-**

(उच्चैः स्वरम्) राधिए अलं परिहासकीलिदेण। ता शिघ्धं इदो आअछसु अण्णहा भअवदी साधुव्वदा कुविस्सदि (इति प्रतिकुञ्जं अन्वेषयति)

(राधिके, अलं परिहासकीडितेन। तत् शीघ्रमितः आगच्छ। अन्यथा भगवती साधुव्रता कुष्यति) (इति प्रतिकुञ्जमन्वेषयति)

(ततः प्रविशति साधुव्रता प्रियव्रता च)

**साधु०-**

(विलोक्य) अये परिणतिमुपगतो दिवसः।

तथाहि-

**प्रेंखत्प्रचण्डकिरणालि[2]पदातिपूर-**
**दूरापसारितमरूद्विहगप्रचारे।**

---

१. ख – तु।
२. क – पदानि।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**व्योमाष्टमांशमुपयातिरसौ प्रसन्न-**
**मेतच्चकास्ति सरसीनिभमन्तरिक्षम् ।।१७।।**

**प्रिय०-**

[1]कधं पब्भट्ठा राधिआ कहिं वि ण दीसई
(कथं प्रभ्रष्टा राधिका कुत्रापि न दृश्यते)

**प्रियव्र०-**

(कर्णं दत्त्वा) भअवदी दाहिणदो कुञ्जगहणे पिअदंसणाए विअ सद्दो लक्खीअदि ।

( (कर्णं दत्वा) भगवति, दक्षिणतः कुञ्जगहने प्रियदर्शनाया इव शब्दः श्रूयते ।)

**साधु०-**

प्रायः सुकुमारयोः राधिका चन्द्रप्रभयोः विश्रान्तिनिमित्तं कुञ्जच्छायायां कस्याञ्चिदवस्थितिं तर्कयामि। तत्सत्त्वरं गत्वा मदागमनं निवेद्य मार्गमारोपयैताः ।

**प्रिय०-**

(सत्वरं शब्दानुसारेण परिक्रामति)

**चन्द्र०-**

हा पिअबहिणि राधिए कदा ख्खु तुमं पेख्खिस्सं।
(हा प्रियभगिनि राधिके, कदा खलु त्वां द्रक्ष्यामि)

**प्रियव्रता-**

(सत्वरमुपसृत्य) सहि चंदप्पभे कहिं गदा राधिआ।
(सखि चन्द्रप्रभे, कुत्र गता राधिका)

**सर्वाः-**

(साश्रु गद्गदम्) भोदि पिअव्वदे महंतो ख्खु एसो अणत्थो उवट्टिदो ता कहेहि दाव कहिं भअवदीत्ति।

---

१. ख – हद्धी कधं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(भवति प्रियव्रते, महान् खलल्वेषोऽनर्थ उपस्थितः। तत् कथय तावत् कुत्र भगवतीति)

**प्रियव्रता-**

एसा मह पुट्ठदोज्जेअ आअच्छदि। अहं खु पिअदंसणाए सद्दं सुणिअ शिग्घं परावडिदह्मि ता कहेध केरिसो वुत्तंतो।

(एषा मम पृष्ठत एवागच्छति। अहं खलु प्रियदर्शनायाः शब्दं श्रुत्वा शीघ्रं परावर्तितास्मि। तत्कथय कीदृशो वृत्तान्तः)

**चन्द्र०-**

सुणादु पिअसही जधा राधिआ [1]खु णिउंजवणं पेक्खिअ देवदाराधणणिमित्तं कुसुमाइं अवचिनेमि त्ति एदं कुंजघरं पइट्ठा तदो तक्खणं जेव्व अहं वि पुट्ठदो तं कुंजघरं पइट्ठा तं ण पेक्खामि तदो अण्णसिं कुंजघरे गदा हुविस्सदित्ति तहिं पिअदंसणाए सुमदिआए मए अ अण्णेसिदा सद्दाविदावि ण दीसदि त्ति [2]एत्तिअं जाणादु भोदी।

(श्रृणोतु प्रियसखी यथा राधिका खलु निकुञ्जवनं दृष्ट्वा देवताराधननिमित्तं कुसुमान्यवचिनोमीति एतत् कुञ्जगृहं प्रविष्टा। ततः तत्क्षणमेववयमपि पृष्ठत स्तं कुञ्जगृहं प्रविष्टा स्तां न पश्यामः। ततोऽन्यस्मिन् कुञ्जगृहे गता भविष्यतीति तत्र प्रियदर्शनया सुमतिकया मया चान्वेषिता शब्दापितापि नो दृश्यत इति एतावज्जानातु भवती।)

**प्रियदर्शना सुमतिका च-** (सवाष्पगद्गद्स्वरम्) सहि पिअव्वदे अदि णिउणं खु अण्णेसिदा राधिआ। ण हु खणमेत्तेण दूरगमणं वि एदाए संभावीअदि। ता केणावि भूदेण अवहरिदेत्ति जाणीमो ण दुक्षंणी[3] भअवदिं वज्जिअ अह्माणं सरणं (इति प्रियव्रतापादयोनिर्पतन्ति)।

---

१. ख – ख।
२. ख – एत्तिएत्तिअं।
३. ख – णहुणी।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

((सवाष्प गद्गदस्वरम्) सखि प्रियव्रते, अतिनिपुणं खल्वन्वेषिता राधिका, न खलु दूरगमनमप्यस्याः सम्भाव्यते। तत्केनापि भूतेनापहृतेति जानीमः। नहि दुःक्षणे भगवतीं वर्जयित्वा अस्माकं शरणम्। (इति प्रियव्रतायाः पादयोर्निपतन्ति))

**प्रिय०-**

(सर्वाः समाश्वास्य) सहीओ तुह्मे दाव इध ज्जे व चिट्ठध अहं उण भअवदीए एदं उत्तंतं णिवेदिमि (इति निवृत्य साधुव्रता समीपमुपसृत्य) भअवदि इदो कुंजघरे पइट्ठा राधिआ केण वि अवहरिदा जदो णिउणं अण्णेसिदा वि ण दीसइ एदा उण कण्णआओ राधिआविरहदुः खिदहिअआओ भअवदिं पडिच्छिअ ट्ठिदा।

((सर्वाः समाश्वास्य) सख्यः, यूयं तावदिहैव तिष्ठत अहं पुनर्भगवत्यै एतद्वृत्तान्तं निवेदयामि (इति निवृत्य साधुव्रतासमीपमुसृत्य) भगवति। इतः कुञ्जगृहे प्रविष्टा राधिका केनाप्यपहृता येन निपुणमन्वेषितापि नो दृश्यते। एताः पुनः कन्यकाः राधिकाविरह दुःखितहृदयाः भगवतीं प्रतीक्ष्य स्थिताः)

**साधु०-**

(सकोपम्) आः कस्यैतच्चापलं विनाशायोद्यतम् (सत्वरं परिक्रम्य) अये एताः कन्यकाः वाष्पविन्दुभिरार्द्रीकृतकपोलतला मामेव प्रतीक्षन्ते।

**[1]सर्वाः-**

(साधुव्रतां दृष्ट्वा [2]सगद्गदम्) भअवदि रक्ख दाव राधिआपरिच्चितं अणाधं कह्णआजणं (इति पादयोः पतन्ति)

((साधुव्रतां दृष्ट्वा सगद्गदम्) भगवति रक्ष तावत् राधिकापरिक्षिप्तं अनाथं कन्यकाजनम्। (इति पादयोः पतन्ति)

---

१. ख – सर्वाः सर्वाः सर्वाः सर्वाः इति वारचतुष्टयमावृत्तमस्ति।

२. ख – गहुरं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**साधु०-**

(सर्वाः समुत्थाय) वत्सा, अलं विषादेन मयि सन्निहितायाम्। तदिदानीं विमुक्तशंकं मामनुव्रजत यावत्कमलालयगतं माधवं भवतीनां संरक्षणे नियुज्य राधिकामानयामि। (इति परिक्रामति)

**प्रिय०-**

(पुरोऽवलोक्य) भअवदि एसो अ अशोअतरूवेदिआए उअविट्ठो विजअणंदेण सह माहवो।

(पुरोऽवलोक्य) भगवति, एष चाशोकतरूवेदिकायामुपविष्टो विजयनन्देन सह माधवः)

**चन्द्र०-**

(सहर्षं सचकितञ्च स्वगतम्) एदं तं विहिणो णिहुरत्तणं जं चंदोदये घनावरणं, जदो दुल्लहजणदंसणावसरे वि एआरिसो विक्खेवो।

(सहर्षं सचकितञ्च स्वगतम्) एतत्तत् विधेर्निष्ठुरत्वं, यच्चन्द्रोदये घनावरणम्, यतो दुर्लभजनदर्शनावसरेऽपि एतादृशो विक्षेपः)

(ततः प्रविशतः श्रीकृष्णविजयनन्दौ)

**श्रीकृष्णः-**

(विलोक्य) सखे, दिष्ट्या वर्द्धसे, यदियं त्वदनुरागभूमिश्चन्द्रप्रभा साधुव्रतामनुयान्ती दृश्यते।

**विजय०-**

(निपुणं निरीक्ष्य) सखे, हर्षहेतुरपि भवद्वचो न मां प्रीणयति। यतो न राधिकामत्र पश्यामि।

**श्रीकृष्णः-**

(निरूप्य सविषादम्) वयस्य, सत्यमात्थ न खलु तन्मयमनसा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मयैतदाकलितं तत्किमत्र कारणं भवेत्।

**विज०-**

अलं विकल्पेन। तदेहि तावत्प्रत्युद्गमनेन भगवतीं संभावयावः (इत्युत्थाय सत्वरमुपसृत्य साधुव्रतां प्रणतः)

**साधु०-**

वत्सौ समीहितभाजनौ भूयास्तम्।

**प्रिय०-**

हा णाह माहव एसो धिआपरिच्चन्तो अघण्णो जणो पणमदि (इति रोदिति)

(हा नाथ माधव, एषो दुहितृपरित्यक्तोऽधन्यो जनः प्रणमति (इतिरोदिति))

**श्रीकृष्णः-**

(सचकितं सविषादञ्च) भगवत्यतिप्रमुग्धोऽस्मि। तत्कथय राधिका-वृत्तान्तम् (इति मूर्च्छां नाटयति, सर्वाः पटान्तेन वीजयन्ति)

**साधु०-**

वत्स, समाश्वसिहि, न खलु किञ्चिदत्याहितं मंस्थाः।

**विज०-**

सखे माधव, समाश्वस्य श्रृणु तावद् भगवत्या वचनम्।

**माधवः-**

(समाश्वस्य) भगवति; कथय तावत् कुशलं राधिकायाः।

**साधु०-**

वत्स, कस्तावदत्र सन्देहः। एहि तावदस्यामशोकवेदिकायामुपविश्य सर्वं कथयामि

(इति परिक्रम्य सर्वे समुपविशन्ति)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**साधु०-**

(मनः समाधाय ध्यानं नाटयित्वा) माधव, श्रृणु तावद् राधिकोदन्तम्।

**माधवः-**

(सशंकम्) भगवत्यवहितोऽस्मि।

**साधु०-**

इह खलु [1]समायान्तीं राधिकां, किन्नरेशसमीपवर्ती यक्षः प्रभुकार्यात्परावृत्येमां भूमिमनुप्राप्तो दृष्टवान्।

**माधवः-**

ततः [2]किमसावकार्षीत्।

**साधु०-**

ततश्च लोकोत्तरं रामणीयकमस्या निरीक्षमाणो "नलकूबरस्यानुरूपेयं वनिते" ति [3]विचिन्त्य तस्योपायनीकर्तुमेनां दक्षिणपार्श्ववर्तिविनिकुञ्जे पुष्पावचयाय प्रविशन्तीं झगिति स्कन्धे समारोप्य भूमिं विहाय विहायसस्तलमुत्पत्यायासीदिति।

**माधवः-**

(सकरूणम्) हा प्रिये राधिके, हा मन्मानसराजहंसि, कथमयमकाण्डे शिरीषकुसुमसुकुमारायास्ते दैवदुर्विपाकः। अथवा ममैव मन्दभाग्यस्य। किञ्च-

**चक्षू रागात्प्रभृति सततं स्वान्तसंकल्पनाद्भि- (भि.)**
**स्त्वत्संगाशांकुरमकरवं पल्लवालंकृतं यः।**
**सोऽहं काले फलसमुचिते वञ्चितो यत्तदास्तां,**
**प्राणेशि त्वां यदयमहरत्तद्विधेः पामरत्वम्।।१८।।**

(इति मूर्च्छां नाटयति)

---

१. ख – आयान्तीं ।
२. ख – किमसार्षात्।
३. ख – विरित्य।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विज०-**

सखे माधव, कथं भवादृशोऽप्येवमधीरतामवलम्बते। तत्समाश्वसिहि तावत्कोऽयं यक्षो यक्षाधिपो वा त्वच्छासनमतिवर्तितुमीष्टे (इति पटान्तेन वीजयति)

**साधु०-**

माधव, कथं मय्यपि नाम न प्रत्येषि।

**माधवः-**

(चेतनामवलम्ब्य[1], सरोषम्) भगवति, तदहमप्यस्य यक्षाधिपते दुर्मदस्य दर्पमपनेतुं गच्छामि (इत्युत्थाय परिकरं बध्नाति)

**सर्वाः-**

(सावष्टम्भं, स्वगतम्) णाह जुज्जइ दे एसो समारंभो।

((सावष्टम्भं, स्वगतम्) नाथ, युज्यते त एषः समारम्भः)

**साधु०-**

माधव, क्षणमुपविश्य मद्वचनमाकर्ण्यताम्। ततश्च तेन गगनमार्गेण गच्छता नीयमाना राधिका विस्फुरन्ती "हा णाह माहव एत्तिअं जेव्व तुह मुहदंसणं ण हु मं जाणासि इमं [2]दसापरिणामं उवगदं हा ताद ! हा अंव ! हा भअवदि साधुव्वदे ! हा चंदप्पभे पिअबहिणि। हा पिअदंसणे ! एत्तिओ ज्जेअ तुम्हाणं राधिआए संजोओ [3]विहिणा णिम्मिदो"

(हा नाथ माधव, एतावदेव तव मुखदर्शनं, न खलु मां जानासि इमां दशापरिणाममुपगताम्। हा तात, हा अम्ब, हा भगवति साधुव्रते, हा चन्द्रप्रभे प्रियभगिनि, हा प्रियदर्शने, एतावदेव युष्माकं राधिकया संयोगो विधिना

---

१. ख – "चेतना" इति नास्ति।
२. ख – दसापरिणाम।
३. ख – विणा।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

निर्मितः) इत्याद्यालपन्ती सचकितं तेन [1]स्कन्धादुत्तार्य धरातले समुपवेश्य सप्रणामं सविनयञ्च विज्ञापिता-भवति, राधिके, कुमारीत्यवगत्य नलकूबरार्थमपहृतासि न खल्वाकलयामि भवतीं माधवपरिगृहीताम् तदिदानीं [2]क्षम्यतामविनयो दासजनस्य तद्विमानमारोप्य प्रापयामि माधवसमीप-मित्यन्तमेनाहूतेन यक्षेणानायितं विमानमारोप्य राधिकां प्रत्यावृत्त एवासौ क्षणमात्रेणायुष्मतो लोचनगोचरीभविष्यतीति।

**विज०-**

(साश्चर्यम्) सखे माधव, अद्भुताश्चर्यमेतद् विज्ञान माहात्म्यं भगवत्याः। पश्यतु भवान्।

**माधवः-**

न खल्वत्र मे लेशतोऽपि [3]विशयावकाशः।

**सर्वाः-**

(सहर्षाद्भुतं स्वगतम्) एआरिसं खु जदुणाहस्य माहप्पं जं णामग्गहणमेत्तेण समीहिदं पावीअदि।

(सहर्षाद्भुतं स्वगतम्) एतादृशं खलु यदुनाथस्य माहात्म्यं यन्नाम ग्रहणमात्रेण समीहितं प्राप्यते)

**साधु०-**

(ऊर्ध्वमवलोक्य) पश्यतु दूरादापतदेतद् विमानम्।

(सर्वे ससम्भ्रमं पश्यन्ति। ततः प्रविशति विमानगता राधिका यक्षश्चाग्रतः)

**यक्ष०-**

अत्र भवति राधिके, पुरः पश्यतु भवती [4]कमलालयम्।

---

१. ख – कन्दुत्तार्यं
२. ख – मयमविनयो।
३. ख – विषया इति परन्तु खपाठ एव समीचीनः।
४. ख – कमलालं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधिका-**

(स प्रत्यभिज्ञमवलोक्य अञ्जलिं बद्ध्वा) भअवदि तिहुवणमंगलभूदे वंदामि। (भगवति त्रिभुवनमंगलभूते, वन्दे)

**यक्षः-**

(समन्तादवलोक्य, श्रीकृष्णं दृष्ट्वा) भवति राधिके, किं न पश्यति भवती रक्ताशोकवेदिकानिषण्णं विमानबद्धदृष्टिं माधवम्।

**राधिका-**

(माधवं दृष्ट्वा सहर्षवाष्पम्) कहं वाहविंदुविंदेहिं दंसणं वि ण पज्जंतं पावी अदि

(कथं वाष्पविन्दुवृन्दैः दर्शनमपि न पर्याप्तं प्राप्यते)

**यक्षः-**

(अञ्जलिं बद्ध्वा) देव, त्रिभुवन मौलिनीलमणे, एष त्वदपराधसाहसिको जनः प्रणमति।

**साधु०-**

माधव, किं न पश्यसि विमानगतां राधिकाम्।

**माधवः-**

भगवति,

**त्वद्वाक्यश्रवणक्षणप्रचलितैर्वाष्पाम्बुधाराशतै-**
**राक्रान्ते मम लोचने प्रभवतो न द्रष्टुमेतां बहि-**
**रन्तः केवलमाकुलालकलतामुत्कम्पिनी मश्रुभिः।**
**पर्यस्तारुणलोचनां सकरूणं पश्यामि मुह्यामि च।।१६।।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**सर्वाः-**

(राधिकां दृष्ट्वा सहर्षम्) अम्हहे भअवदीए [1]पसाएण पुणो वि जीअलोअं [2]उवगदह्म।

(अम्हो, भगवत्याः प्रसादेन पुनरपि जीवलोकमुपगतास्मः)

**विज०-**

(माधवस्य मुखं सरोजलेन प्रक्षाल्य) सखे, समाधाय पश्य समीपमागतां राधिकाम्।

**माधवः-**

(तथा करोति)

**यक्षः-**

(विमानेन सह भूमितलमवतीर्याञ्जलिं बद्ध्वा) भगवन् यदुवंशकेतो, रक्ष शराणागतमपराधिनं दासजनम्। (इति साष्टांगपातं पादयोर्निपतति)

**श्रीकृष्णः-**

अभयं शरणागतस्य।

**राधिकाः-**

(विमानादवतीर्य साधुव्रतां प्रणमति)

**साधु०-**

(राधिकां गाढमालिंग्य) वत्से, कल्याणिनी भूयाः।

**सर्वाः-**

(ससम्भ्रमं राधिकामालिंग्य) सहि [3]जन्मंतरागद विअ तुमं पेक्खुओ। (सखि, जन्मान्तरागतामिव त्वां पश्यामः)

---

१. ख – ससाएण ।

२. ख – उसगदह्म।

३. ख – "मन्तरागदं" इतयारम्य "युक्तमाह" पर्यन्तं नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्रिय०-**

सहि, जस्स णामग्गहेण सकंडादो मोआविदासि सो कहं ण पणमीअदि।
(सखि, यस्य नामग्रहेण संकटान्मोचितासि असौ कथं न प्रणम्यते)

**साधु०-**

युक्तमाह प्रियदर्शना। तद्वत्से, प्रणम्यतां यदुनन्दनः।

**राधिका-**

(सलज्जं कटाक्षेण माधवमवलोक्य) भअवदि लज्जेमि एदं णिओअं कादुं। (भगवति लज्जामि एतं नियोगं कर्तुम्)

**प्रिय०-**

(राधिकां गृहीत्वा माधवचरणयोर्निदधाति)

**माधवः-**

(सवाष्पपुलकं कराभ्यां करपल्ल्वयोर्गृहीत्वोत्थाप्य) भवति, समीहितभाजनं भूयाः।

**विज०-**

माधव, समाधीयतामयं [1]प्रणतः किन्नरेशकिंकरः।

**श्रीकृष्णः-**

अयि भोः, भगवत्या साधुव्रतयैवावेदिता त्वदीया भक्तिः। तदुत्तिष्ठतु।

**यक्षः-**

(उत्थाप्य) देव, यद्यहमनुग्राह्यस्तदेकं प्रार्थये।

**श्रीकृष्णः-**

ब्रूहि यत्तवाभिलषितम्।

---

१. क – "प्रणतः" इत्यारभ्य "इति पत्रिकां लिखित्वा" इत्यन्तं नास्ति। स्पष्टं पृष्टमेकं नोपलम्यत इति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**यक्षः-**

यथेमं वृत्तान्तमुपलभ्य यक्षाधिपतिर्मह्यं न कुप्यति तथा करोतु देवः।

**विज०-**

वयस्य सत्यमाहासौ। तल्लिख्यतामलकाधिपतये यदयमस्मत्प्रसाद-पात्रमिति बहुमानं त्वत्तोऽर्हतीति।

**श्रीकृष्णः-**

वयस्य, तल्लिख्यतां मन्मा (मन्नाम्ना) पत्रिका।

**विज०-**

यदादिशते व (यदादिशति भवान्)

(इति पत्रिकां लिखित्वा प्रददाति)

**यक्षः-**

(गृहीत्वा वाचयति) स्वस्ति श्रीमद्वृन्दावनतः सकलयदुकुलतिलकः श्रीकृष्णः सुहृदमलकाधिनाथं गाढाश्लेषपूर्वकमनामयं पृच्छन्नावेदयति यदयं भवत्परिचारकश्चित्रांगदो नाम यक्षोऽस्म दनुकूलाचरणात्प्रसादपात्रतामुपगतो भवतोऽपि बहुमानमर्हति (इति श्रीकृष्णं प्रति) देवैवंविधापकारिष्वपि वर-वितरणं श्रीवत्सांकहृदयस्य भवतो नाश्चर्यहेतुः। तदनुजानीहि मां गमनाय।

**श्रीकृष्णः-**

सन्तु शिवास्ते पन्थानः।

**यक्षः-**

(प्रणम्य निष्क्रान्तः)

**साधु०-**

वत्से राधिके, चन्द्रप्रभया सह सौभाग्यदेवतां कमलां पूजयतु भवती।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधि०-**

जं आणवेदि भअवदी (इति चन्द्रप्रभया सह उत्थाय) पिअदंसणे पूओवअरणाइं गेण्हिअ अग्गदो होहि।

(यथाज्ञापयति भगवती (इति चन्द्रप्रभया सहोत्थाय) प्रियदर्शने, पूजोपकरणानि गृहीत्वाऽग्रतो भव)

**प्रिय०-**

(उत्थाय) सहि इदो आअच्छदु चंदप्पभं गेण्हिअ भोदी।

((उत्थाय) सखि, इत आगच्छतु चन्द्रप्रभां गृहीत्वा भवती)

(राधिकाचन्द्रप्रभे परिक्रम्य कमलागृहं प्रविशतः)

**साधु०-**

वत्सौ माधवविजयनन्दौ, युवामपि पूजां द्रष्टुं गच्छेतम्।

**माधवः-**

यदादिशति भगवती।

(इति सर्वे परिक्रम्य, कमलागृहं प्रविश्य, प्रणम्य कमलां, पूजोत्सवं पश्यन्ति। ततः प्रविशति पटाक्षेपेण त्वरितो विदूषकः)

**विदूषकः-**

(स्वगतम्) जं दाव लोए भणीअदि "इत्थिआणं चरितं देवो न जाणादि" त्ति तं ण अण्णहा होदि जेण अदिमेत्तं चंडसहावा[1] वि देवी [2]सच्चभाभा सवत्तिपरिग्गहं अंगीकारिदा ता जाव देवीए संदेसं कहिदुं माहवसआसं गच्छामि (इति परिक्रम्य) एसो कमलालओ ता जाव उपसप्पामि (इत्युपसृत्य कृष्णं दृष्ट्वा) सोत्थि, वड्ढदु भवं।

---

१. ख – सहाधा।
२. ख – सच्चवग्गं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

((स्वगतम्) यत्तावत् लोके भण्यते "स्त्रीणां चरितं देवोऽपि न जानाति" इति तदन्यथा न भवति, येनातिमात्रं चण्डस्वभावापि देवी सत्यभामा सपत्नीपरिग्रहमंगीकारिता। तद् यावद्देव्याः सन्देशं कथयितुं माधवसकाशं गच्छामि (इति परिक्रम्य) एषः कमलालयः। तद्यावदुपसर्पामि (इत्युपसृत्य कृष्णं दृष्ट्वा) स्वस्ति, वर्द्धतां भवान्।

**श्रीकृष्णः-**

(प्रणम्य) माण्डव्य, कथमिहस्थोऽहं विदितो भवता।

**विदूषकः-**

देवीए सच्चभामाए [1]वअणेण।

(देव्याः सत्यभामाया वचनेन)

**सर्वाः-**

(सभयं स्वगतम्) किं णु खु एदं सच्चं जेव्व सच्चभामाए विदिदं भवे।

((सभयं स्वगतं) किन्नु खल्वेतत्सत्यमेव सत्यभामया विदितं भवेत्)

**श्रीकृष्णः-**

कथमेतद् देव्याप्यधिगतम्।

**विदूषकः-**

किं णाम देवीए ण आणीअदि।

(किन्नाम देव्या न ज्ञायते)

**श्रीकृष्णः-**

आस्तामेतत् । कथय तावत् देवी प्रसन्ना न वेति।

---

१. ख – वंअणेग।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विदूषकः-**

भो कहं ण पसण्णा होदु णहु देवदाणं पडिऊलं कादुं पहवदित्ति।

(भोः कथं न प्रसन्ना भवतु। न खलु देवतानां प्रतिकूलं कर्तुं प्रभवति इति)

**सर्वाः-**

(सस्मितं जनान्तिकम्) धुत्तो खु एसो बह्मणो दीसइ।

(सस्मितं जनान्तिकम्) धूर्तः खल्वेषो ब्राह्मणो दृश्यते।

**श्रीकृष्णः-**

जानाम्येतत्त्वदीयं कल्पनापाण्डित्यं, तत्कथय भूतार्थम्।

**[1]विदूषकः-**

(विहस्य) कहइस्सं, कमलाए अच्चणं दाव होदु।

(((विहस्य) कथयिष्यामि, कमलाया अर्चणं तावद्भवतु)

**राधिकाः-**

पिअव्वदे जादं खु कमलाए अच्चणं ता भअवदी सआसं गच्छह्म।

(प्रियव्रते, जातं खलु कमलाया अर्चनम्, तद् भगवतीसकाशं गच्छामः)

**प्रिय०-**

सहि ता वरं अब्भत्थेहि।

(सखि, तद्वरमभ्यर्थयस्व)

**राधिका-**

(सलज्जमधोमुखी तिष्ठति)

---

१. ख – "विदूषकः" इति नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**विदूषक:-**

(अग्रतो भूत्वा) भोदि राधिए मह वरो माहवो होदुत्ति तुमं दाव अब्भत्थेहि चंदप्पभा उण विजअणंदो वरो होदुत्ति अब्भत्थइस्सदि।

((अग्रतो भूत्वा) भवति राधिके, ''मम वरो माधवो भवतु'' इति त्वं तावदभ्यर्थयस्व, चन्द्रप्रभा पुनः ''विजयनन्दो वरो भवत्वि'' त्यभ्यर्थयिष्यते। (राधिकाचन्द्रप्रभे [1]सकटाक्षं माधव विजयनन्दाववलोकयतः)

**माधवविजयनन्दौ**— मूर्ख, स्वाभिप्रायेणैव यत्किञ्चिदभिदधानो न लज्जसे। तदलमनया [2]वाचाटतया।

**विदूषक:-**

जइ मह [3]वअणे सापच्चओ ता पुच्छीअदु एदाणं कण्णआणं कहिं तुह्माणं अहिलासो त्ति।

(यदि मम वचने साप्रत्ययौ तत्पृच्छेतामेतयोः कन्यकयोः ''कुत्र युवयोरभिलाष'' इति।

**प्रिय०-**

(सस्मितम्) सहीओ बह्मणस्स वअणंज्जेव्व अह्माणं [4]माणणिज्जं ता एवं जेव्व अब्भथीअदु।

(सस्मितम्) सख्यौ, ब्राह्मणस्य वचनमेवास्माकं माननीयं तदेवमेवाभ्यर्थेथाम्।

**राधिकाचन्द्रप्रभे-**

(सान्तःस्मितं स्वगतम्) भअवदि एदं ज्जेव्व बह्मणस्स वअणं सच्चं भोदु।

((सान्तःस्मितं स्वगतम्) भगवति, एतदेव ब्राह्मणस्य वचनं सत्यं भवतु)

---

१. ख – सकठक्षं।
२. ख – वाचातया।
३. ख – वआणे।
४. ख – माणिज्जं।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(इति प्रार्थयित्वा प्रणम्योत्थाय बहिर्निगच्छतः सर्वे तथैव विनिर्गत्य साधुव्रतामुपसर्पन्ति)

**साधु०-**

(विदूषकमवलोक्य) माण्डव्य, कच्चिदिदानीमेव समागतो भवान्।

**विदू०-**

अहइं (अथ किम्)

**साधु०-**

तत्कथय कञ्चिद्विशेषोदन्तम्।

**विदू०-**

कहेमि सुणादु दाव भअवदी।

(कथयामि श्रृणोतु तावत् भगवती)

**साधु०-**

अवहितास्मि।

**विदू०-**

अज्ज खु अहं एदाए वेलाए [1]आआरिअ देवीए सच्चभामाए भणिदो जहा माण्डव्व अज्ज मए वुसमाणू आआरिअ राधिआणिमित्तं भणिदो माहवस्स राधिअं पडिवादेसुत्ति तदो एण्हिं जेव्व तेण कंचुई पेसिदो संदिट्ठं अ जहा अज्जज्जेअ रत्तिम्मि विवाहमुहुत्तो वट्ठदित्ति देवीए जाणिदं भोदुत्ति ता तुमं अज्जउत्तसमीपं गदुअ मह वहणेण विणवेसु जं अज्जउत्तेण विवाह कज्जे सज्जीभविदव्वं [2]त्ति ण हु एत्थ एव्वं संकिदव्वं जं कित्ति एसा [3]सवत्तिपरिग्गहे पउत्तेत्ति जदो पदिव्वदाणं भत्तुणो अणुऊलाचरणं ज्जेव्व सोहग्गसंपतीए कालणं त्ति।

---

१. ख – "आआरिअ" इत्यारभ्य "राधि०" पर्यन्तं नास्ति।
२. ख – सज्जीभविदं भोदुत्ति।
३. ख – वत्तिपरिग्गहे।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

(अद्य खल्वहमेतस्यां वेलायामाकार्य देव्या सत्यभामया भणितो यथा-''माण्डव्य, अद्य मया वृषभानुराकार्य राधिकानिमित्तं भणितः माधवाय राधिकां प्रतिपादय'' ''इति, ततो'' यद्देव्याज्ञापयति'' इति भणित्वा गतस्तदानीमेव तेन कञ्चुकी प्रेषितः सन्दिष्टश्च ''यथाद्यैव रात्रौ विवाहमुहूर्तो वर्ततं इति देव्या ज्ञातो भवतु'' इति तत् त्वमार्यपुत्रसमीपं गत्वा मद्वचनेन विनिवेदयस्व यदार्यपुत्रेण विवाहकार्ये सज्जीभवितव्यमिति। न खल्वत्रैवं शंकितव्यं यत् किमित्येषा सपत्नीपरिग्रहे प्रवृत्तेति। यतः पतिव्रतानां भर्तुरनुकूलाचरणमेव सौभाग्यसम्पदः कारणमिति)

**साधु०-**

(सस्मितम्) नैतच्चित्रं सत्यभामायां महाकुलप्रसूतायाम्।

**राधिका-**

(सहर्षं स्वगतम्) हिअअ अज्जविदेण आसंधो जाव तादस्स वअणं ण सुणीअदि।

((सहर्षं स्वगतम्) हृदय, अद्यापि ते नाश्वासो यावत्तातस्य वचनं न श्रृणोषि)

**साधु०-**

वत्स माधव, श्रुतं सत्यभामायाः सन्देशवचनम्। तत्सज्जीभवतु भवान् सह विजयनन्देन।

**माधवः-**

भगवति, देवीसन्देशाद् भवतु तावत् ममाध्यवसायः, विजयनन्दस्य [1]पुनरध्यवसाये किं पश्यति भगवती।

---

१. ख – रधावसाये।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**चन्द्र०-**

(आत्मगतम्) दिट्ठिआ क्खु जं मह मसिट्ठिदं तं जेव्व माहवेण पुच्छीअदि। ([1](आत्मगतम्) [2]दिष्ट्या खलु यन्मम मनसि स्थितं तदेव माधवेन पृच्छ्यते)

**साधु०-**

ननु प्रागेव वृषभानुना मदग्रे प्रतिज्ञातमेतत्, यथा- सत्यभामया प्रार्थितोऽहमवश्यमेव[3] राधिकां माधवाय प्रतिपादयिष्यामि, तत्रैव च मुहूर्ते चन्द्रप्रभामपि विजयनन्दायेति।

**माध०-**

यथाज्ञापयति भगवती, किन्तु देवीसन्देशं प्रत्युपहासशंकाकलंकितमिव मे हृदयम्।

**साधु०-**

(सस्मितम्) नैतच्छंकास्पदम्। अथवा किमनया त्वरया। अवश्यं तावदेतयोः कुमार्योराकारणाय गुणवतीदेवी कञ्चुकिनं प्रेषयिष्यति।

(ततः प्रविशति कञ्चुकी)

**कञ्चुकी-**

(पुरोऽवलोक्य) एषः कमलालयो दृश्यते। तद्यावत् सत्वरं गच्छामि (इति परिक्रम्य सर्वतो विलोक्य) अये, एताः कन्यकाः साधुव्रतया सहास्मिन्नुद्याने दृश्यन्ते तदुपसर्पामि। ([4]इत्युपसृत्य प्रणमति)

**साधु०-**

विनतकन्धर, उपविश्यताम्।

---

१. ख – आत्मगत देशाद्भवतु वाव।
२. ख – ष्ट्या
३. ख – मवश्यमवश्यमेव।
४. क – इत्युपविश्य। ख – इत्युपसिस्य। "इत्युपसृत्य" इति तु समीचीनः प्रतिभाति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कञ्चु०-

भगवति, न खलूपवेशने योग्योऽयं जनस्तदग्रत एव स्थितो विज्ञापयामि।

साधु०-

किं गुणवत्या देव्या प्रहितो भवान्

कञ्चु०-

न केवलं देव्या, अपितु देवेन वृषभानुनापि।

राधिका-

एत्थ दाणीं ण को वि संदेहो किं उण ण आणीअदि किं भणिस्सदित्ति काअरं क्खु मे हिअअं।

(अत्रेदानीं न कोऽपि सन्देहः। किं पुनर्न ज्ञायते किं भविष्यतीति कातरं खलु मे हृदयम्)

चन्द्र०-

(आत्मगतम्) एत्थ दाणीं सग्गणरआणं अन्तराले पडिदह्मि भअवदी कधिदाणुरूवं भणिस्सदि ण वेत्ति।

((आत्मगतम्) अत्रेदानीं स्वर्गनरकयोरन्तराले पतितास्मि, भगवती कथितानुरूपं भणिष्यति न वेति)

साधु०-

[1]तत्कथ्यतां किमाहतुस्तौ।

कञ्चु०-

भगवति, श्रूयताम् देवेन देव्या चाहमाहयाज्ञप्तो यथा "विनतकन्धर,

---

१. ख – तत्कथातां

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

[1]सत्वरं कमलालये गत्वा तत्र स्थिता भगवती साधुव्रतास्मद्वचनेन विज्ञापनीया [2]यथाद्य देव्या सत्यभामया माधवार्थं राधिका सबहुमानं [3]प्रार्थिता। आवाभ्यां चैतदंगीकृतं तदद्यैव रात्रौ विवाहलग्नमिति राधिकाचन्द्रप्रभे कृतसौभाग्य-देवतार्चने गृहीत्वा माधवविजयनन्दयोश्च कार्यमावेद्य सत्वरमागम्यतामिति।

**साधु०-**

वत्स माधव, तद् भवान् विजयनन्देन सह विवाहमहोत्सवाय सत्वरं सज्जीभवतु। अहमप्येते [4]कन्यके गृहीत्वा गच्छामि। (इति सर्वे निष्क्रामन्ति)

(ततः प्रविशति कौतुकाविष्टः कञ्चुकी)

**कञ्चुकी-**

(नेपथ्यावलोकितकेन) अहो, बहोः [5]कालादुपनतोऽयमस्मत्स्वामिमन्दिरे महोत्सवः। तथाहि-

**उच्चैःपापठ्यमानैरवनिसुरकुलैर्ऋग्यजुः साममन्त्रैः।**
**तन्त्रैर्नानाविचारप्रकटनपटुभिः पण्डितैः प्रोच्यमानैः।**
**[6]नृत्यैर्वारांगनानामति मधुरतरैर्वेणुवीणानिनादैः[7]।**
**झांकारैर्झल्लरीणां नृपसदनमिदं [8]सर्वतो व्याप्तमास्ते।।२०।।**

(ऊर्द्ध्वमवलोक्य) अये न [9]केवलमयमस्माकमेव महोत्सवो यावद्देवतानामपि द्विगुणो दृश्यते।

---

१. ख – तअ
२. ख – थाद्य
३. ख – प्रार्थिगता
४. ख – 'क" मात्रमस्ति
५. ख – दुपनवेयो
६. ख – तन्त्रैवाराननानामपि
७. ख – "नादैर्झा" इत्यस्य स्थाने" मंहोत्सवोवद्देवतनपि द्विगुणोश्यते दै" इतिपाठः।
८. ख – "सर्व" मात्रम्
९. ख – मेवायं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तथाहि-

दिव्यस्रग्गन्धगन्धोज्ज्वलसुरविसरैर्यक्षरक्षःकदम्बै-
र्दिव्यद्दिग्लोकपालैः[१] परिवृतमभितः किन्नरैरप्युदारैः[२]।
गायन्गान्धर्वविद्याधरकुलकलितोल्लासनृत्यत्सुवेष
स्वर्वेश्यामञ्जुसिञ्जन्मणिवलयमिदं व्योमचित्रं चकास्ति।।२१।।

(पुनर्निपुणं विलोक्य) अये, न केवलं साधारणं देवता एवात्र समागताः किन्तु ब्रह्माद्या अपि।

यतः-

साक्षाद्विष्णुरयं चकास्ति गरुडे पद्मालयासंयुतो।
रूद्रौऽसौ वृषसंस्थितो गिरिजया सार्द्धं मुहुर्वीक्ष्यते[३]।
गायत्यम्बुजयोनिरेष चतुरो वेदांश्चतुर्भिर्मुखै[४]
र्द्रष्टुं कौतुकमागतः सुरपतिःशच्या विमानस्थितः।।२२।।

(आश्चर्यमभिनीय) अहो, महाश्चर्यमेतत्–

कीर्णैः पिष्टातचूर्णै[५]रहमहमिकया संपतद्भिर्विमानै-
श्चन्द्रज्योत्स्नाप्रचारे सरभसमखिले सर्वतः सन्निरुद्धे।
स्फूर्जद्भूषा मणीनामुरुतर [६]चपलोद्योत[७]विद्योतमानं,
[८]चित्रं व्योमेदमुद्यद्घनसमयमिवेन्द्रायुधाकीर्णमस्ति।।२३।।

(नेपथ्याभिमुखमाकर्ण्य)

---

१. ख – पाकेलैः
२. ख – रप्युतादारैः
३. ख – वीक्षते।
४. ख – "मु" नास्ति।
५. ख – रिहमहमिकया।
६. ख–"तरु
७. ख–लोलोत
८. ख–चित्रे

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ऋक्सामसंगमकथामिह बह्वृचाना,
यद्ब्राह्मणे निगदितां प्रपठन्ति विप्राः।
जाने परस्परनिरीक्षणकर्म तस्मा-,
[1]दस्मादृशामतिमहोत्सवकारि वृत्तम्।।२४।।

तदिदानीं पुष्पमण्डपादिकारिणां मालाकाराणां प्रभुसमादिष्टं पारितोषिकं [2]दातुं गच्छामि (इति निष्क्रान्तः)

(ततः प्रविशतस्तल्पगतौ राधामाधवौ)

माधवः-

(राधिकां विलोक्य) अये, समागतनिद्रा प्रिया लक्ष्यते। तदेनां गाढालिंगनेन प्रबोधयामि तावत् (नाट्येन समालिंग्य) कथं निद्राभरेण न किञ्चिदाकलयति (विचिन्त्य) अहो निद्रास्तम्भितस्मितादिभावविधुर-मालिंगनमपीदं प्रियाया न तादृक् सुखयति यथा निरीक्षमाणमात्रमपि तत्तद्भावकरम्बितम्। तथाहि, स्मरामि-

वामेतरकराकृष्टवसनाञ्चलमुद्रितम्।
स्मितं स्मेरकपोलाक्ष्याः स्मरस्येव रणायनम्।।२५।।

किञ्च विचित्रमेतत्कामतन्त्रम्, यदत्र निषिध्यमान सेवनमेव सुखपरिणाममुपजायते। तथाहि-

नवदयितसमागमे [3]सखीभिः,
कथमपि केलिगृहं निवेशितायाः।
सकुतुकरभसोपगूहनादौ,
जयति [4]नकारपरम्परा मृगाक्ष्याः।।२६।।

(नेपथ्ये)

१. ख–"दस्मा" नास्ति
२. ख–"दा" नास्ति
३. ख–सवीभिः
४. ख–नकारपरा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**वैतालिकः-**

जय जगदानन्दकन्द ! यदुकुलकमलमिलिन्द मुकुन्द ! सुप्रभातं [1]भवतः।
तथाहि-

**दूरादेत्य [2]समुत्सुकोऽपि भगवानम्भो [3]जिनीवल्लभ-,**
**स्त्वद्बोधं समुदीक्षमाण इव तद्वागाविरास्ते पुरः।**
**वेलामाकलयत्यसौ कमलिनी कान्तागमस्य ब्रुवन्**
**निर्यन्मञ्जुमिलिन्दवृन्दमिषतो ग्रथ्नाति वेणीमिमाम्।।२६।।**

अपि च-

**दयितसमागमवेलामाकलयन्ती सरोजिनी [4]नियतम्।**
**निर्यन्मिलिन्दमिषतो दिक्षु कटाक्षान्विक्षिपति।।२८।।**

**माधवः-**

(समाकर्ण्य) अये, अनाकलितयामैव यामिनीयमकाण्ड एव प्रभातशेषा संवृता। तद् यावत् प्रिया न [5]प्रतिध्यायते तावदस्या विनोदनार्थं प्रत्यग्र-[6]विकसितानि कमलानि [7]प्रमदवनवापीमध्यादाहरामि (इत्युत्थाय) कः कोऽत्र भोः।

**कञ्चुकी-**

(समुपसृत्य) विजयतां देवः।

---

१. ख– सुप्रभातां।
२. ख– सुत्सुकोऽपि
३. ख– जिजीनी
४. ख–"नियतं" इत्यारभ्य "सरोजिनी" इत्यन्तं नोपलभ्यते।
५. ख– प्रतिबुध्येते
६. ख– विसितानि।
७. ख– मातृकायाः ३२ पत्रं नोपलभ्यते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**माधवः-**

विनतकन्धर ! प्रमदवनवापिकामागमादेशय।

**कञ्चुकी-**

देव इत आगम्यताम्।

**माधवः-**

(परिक्रामन् वाप्याः समीपमुपसृत्य), अहो, रमणीया प्राभातिकी कापि शोभा कमलाकरस्य।

तथाहि-

**शीर्यत्सन्तमसानुसारविदितप्राणप्रियाभ्यागमा-**
**मन्दानन्दविकासहाससरसामोदानुलिप्ताम्बरम्।**
**व्रध्नान्तःपुरमेतदुद्धतरणन्माध्वीकभुग्डिण्डिम-**
**ध्वानारब्धमहोत्सवं कमलिनीखण्डं समुज्जृम्भते।।२६।।**

तद्यावदिदं कमलाकरस्य रामणीयकं दर्शयितुं प्रियामानयामि (इति सत्वरं परिक्रामति)

**कञ्चुकी-**

इतो वासगृहं, प्रविशतु देवः।

**माधवः-**

(पुरोऽवलोक्य) अये, कुपितेव प्रियतमा लक्ष्यते। यतः-

**करतललीनकपोलं दीर्घोच्छ्वासावधूतरदवसनम्।**
**घूर्णितनयनममुष्या वदनं मानं निवेदयति।।३०।।**

नूनमेकाकिनं प्रमदवनशोभादर्शनाय गतं मामवधार्य कुपिता प्रिया (समीपमुपसृत्य, राधिकां करतले गृहीत्वा) प्रिये, प्रमदवनगतां विकचपंकजां सरसीं दर्शयितुं भवतीमिच्छामि।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधिका-**

अज्जउत्त कि त्ति अलीअं भणीअदि।

(आर्यपुत्र, किमित्यलीकं भण्यते।

**माधवः-**

प्रिये कथमकाण्ड एवेदमलीकभाषणं मय्यारोपयति भवती। न खलु लवमप्याकलयामि स्खलितस्य। तत्कथय किमस्य विषादस्य बीजम्।

**राधिका-**

णाह एवं खु सुणीअदि।

(नाथ, एवं खलु श्रूयते)

**माधवः-**

प्रिये, तत्कथ्यताम्।

**राधिका-**

(संस्कृतमाश्रित्य)

**सद्वृत्तताविरहितां कठिनां तथान्तः-**
**शून्यामतीवमुखरामपि [1]भूरिरन्ध्रीम्।**
**रूपेण नीरसतरेण च दारुणाद्यां,**
**कृष्णः प्रियां भजति काञ्चिदसौ निगूढम्।।३१।।**

**माधवः-**

(श्रुत्वा सस्मितं स्वगतम्) अये, कयापि विदग्धया सख्या मुरलीमभिप्रेत्य श्लेषोक्त्या विप्रलब्धेयम् (प्रकाशम्) प्रिये, सत्यमेवैतत् सर्वम्। निगूढमिति परमलीकम्।

---

१. अत्र कमातृकायां पाठः भ्रष्टः। खमातृकायास्तु ३२ पृष्ठमेव नोपलभ्यते। अर्थानुरोधात् "भूरिरन्ध्रीम्" इति पाठो मया कल्पितः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**राधिका-**

(सभ्रूभंगम्) ता ण ज्जेव्व गेण्हिअ अज्जउत्तो पमदवनं गच्छदु (इत्युत्थाय गन्तुमिच्छति)

((सभ्रूभंगम्) तन्नैव गृहीत्वा आर्यपुत्रः प्रमदवनं गच्छतु (इत्युत्थाय गन्तुमिच्छति))

**माधवः-**

(पटान्तेन धृत्वा) प्रिये कयापि विप्रलब्धासि न खल्वविचार्य त्वदेकजीविते मयि युक्तः कोपानुबन्धः (इति पादयोःपतति)

**राधिका-**

(साश्रुपातं माधवमुत्थाय) णाह ण़ मे कोवो जुत्त ज्जेव्व मए भणिदं जइ सहीए भणिदं सच्चं ता वि ण मए पओअणंति।

((साश्रुपातं माधवमुत्थाय) नाथ न मे कोपो युक्तः। एवमेव मया भणितम्। यदि सख्या भणितं सत्यं तथापि न मया प्रयोजनमिति।

**माधवः-**

प्रिये,

**वयस्यापि मनस्याधिमारोपितवती तव।**
**परिहासलताकन्दमिवानंगविनोदनम्।।३२।।**

**राधिका-**

कहं एसो परिहासो त्ति जाणिदव्वं।
(कथमेषः परिहास इति ज्ञातव्यम)

**माधवः-**

प्रिये, अयमहं प्रकाशयामि परिहासम् (इति मुरलीं वादयति)

**राधिका-**

(आकर्ण्य सानन्दं कृष्णमालिंगति)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**माधवः-**

(आलिंगनानन्दमभिनीय स्वगतम्) अहो, सकलकामायुधमूर्धन्यः खल्वसौ वंशीनिनादः। यतः –

**आलीश्लिष्टोक्तिभिः क्लिष्टाप्याकर्ण्य मुरलीध्वनिम्।**
**विसस्मार स्मरावेशवशान्मन्युं मृगांगना।।३३।।**

**राधिका-**

(सवितर्कमात्मगतम्) अम्हहे वंशीए ववदेसेण[1] सिलिट्ठवअणेहिं सुमदिआए कहं वंचिदह्मि (प्रकाशम्) अज्जउत्त आचरिदं जं अज्जउत्तो परूसं भणिदो।

((सवितर्कमात्मगतम् ) अम्हो, वंश्याः व्यपदेशेन श्लिष्टक्चनैः सुमतिकया कथं वंचितास्मि (प्रकाशम्) आर्यपुत्र, सत्यमेव विप्रलब्धया मयानार्यमाचरितं यदार्यपुत्रः परुषं भणितः)

**माधवः –**

प्रिये, परुषमपि ते वचनं पानकरसे मरिचखण्डवद्रोचतेतरां प्रेमरसास्वादे। तदेहि तावत् प्रमदवनमेव गच्छावः (इति परिक्रामतः)।

**राधिका–**

अज्जउत्त पेक्ख दाव देवस्य सहस्सकिरस्स लिहिदं बिंवं (अञ्जलिं बद्धवा) णमो दे[2] तिहुअणेक्करदीवाअ (इति प्रणमति)

(आर्यपुत्र, पश्य तावत् देवस्य सहस्त्रकिरणस्य लिखितं विम्बम् (अञ्जलिं बद्धवा) नमस्ते त्रिभुवनैकदीपाय (इति प्रणमति))

**माधवः-**

प्रिये [3]सम्यग् लक्षितं भवत्या। अयं खलु भगवान्-

---

१. ख– ववहेसेन
२. ख–तिहअणे
३. ख–सम्यक्कालक्षितं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्राच्याः कर्णावतंसः किं रक्ताशोकदलैः कृतः।**
**अर्द्धोदितो रविर्भाति साक्षाद्वर्ण इवारुणः।।३४।।**

भगवन्, निखिललोकैकलोचन, नमस्ते (इति प्रणम्य राधिकां प्रति) प्रिये पश्य तावदिमां नलिनीखण्डशोभाम्।

**राधिका-**

(निर्वर्ण्य) अज्जउत्त एदाणं कमलाणं कलिआओ णिक्कामंत महुअरणिअरेण उघ्घाडीअंति।

((निर्वण्य) आर्यपुत्र एतासां कमलिनीनां कलिकाः निष्क्रामता मधुकरनिकरेण उद्धाट्यन्ते)

**माधवः-**

प्रिये, अहं पुनरेवमाकलयामि।

**राधिका-**

कहं विअ (कथमिव)

**माधवः-**

**निजविरहेण निशायां कमलिन्या रविरतीवखिन्नायाः।**
**स्मरशरशल्यगणानिव मधुपान् स्वकरैः समुद्धरति।।३५।।**

**राधिकाः-**

जुत्तं खु अज्जउत्तो भणादि। अण्णहा कहं एदेसु निग्गदेसु पसन्नमुहासो कमलिनीओ दीसन्ति।

(युक्तं खल्वार्यपुत्रो भणति, अन्यथा कथमेतेषु निर्गतेषु प्रसन्नमुख्यः कमलिन्यो दृश्यन्ते)

**माधवः-**

प्रिये, प्रभातमारूतोपनीतोऽयं[१] नानाविधलताकुसुमामोदः संकीर्णतया

---

२. ख– "नीतोऽयं" नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विचित्र इव लक्ष्यते। तदेहि तावदेतासां लतानां रामणीयकं पश्यावः।

**राधिकाः-**

तह (इति परिक्रम्य, दृष्ट्वा, सहर्षम्) अज्जउत्त मंदमारूदं दोलिआणं लदाणच्चकीणं रंग गणं विअ पमदवणं सौहइ।

(तथा (इति परिक्रम्य, दृष्ट्वा सहर्षम्) आर्यपुत्र, मन्दमारूतान्दोलित-लतानृत्यकीर्णं रंगांगणमिव प्रमदवनं शोभते)

**माधवः-**

प्रियेे, सम्यगनुलक्षितम्। इह हि –

**स्नातः पद्मसुगन्धि सारसजलैरापीत पुष्पासवो।**
**गायन्कीचकनिर्गतैः स्वरझरैर्मध्ये वनान्तःपुरम्।**
**काञ्चिन्नर्त्तयति स्पृशत्यथ परां चुम्बत्यथान्यां बला-**
**दालिंगत्यपरां लतासुरमणीं मत्तोऽनिलो दक्षिणः।।३६।।**

**राधिकाः-**

अदो ज्जेव्व दाहिणो त्ति भणीअदि (पार्श्वतो विलोक्य, सुमतिकां दृष्ट्वा) अज्जउत्त जह क्खु सुमदिआ इदो मुहं आअच्छदि तह मण्णे भअवदी साधुव्वदा आअदत्ति।

(अतएव दक्षिण इति भण्यसे (पार्श्वतो विलोक्य सुमतिकां दृष्ट्वा) आर्यपुत्र, यथा खलु सुमतिका इतोमुखमागच्छति तथा मन्ये भगवती साधुव्रता आगच्छतीति)

**माधवः-**

प्रिये, यथाभूतमेव भवत्या तर्कितम्। भक्तवत्सला खलु भगवती यदस्मास्वेवं कृपयति।

(ततः प्रविशति सुमतिका)

**सुम०-**

(पुरोऽवलोक्य) एसो जदुणंदणो राधिआसणाधो मालईलदामंडवे

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

संणिहिदा दीसई ता उवसप्पामि (इत्युपसृत्य) जअदि जदुणाहो एसा क्खु भअवदि वउलवेदिआए उवविट्ठा देवं दट्ठुं आगदा।

((पुरोऽवलोक्य) एषो यदुनन्दनो राधिकासनाथो मालतीलतामण्डपे सन्निहितो दृश्यते। तदुपसर्पामि (इत्युपसृत्य) जयति यदुनाथः। एषा खलु भगवती वकुलवेदिकायामुपविष्टा देवं द्रष्टुमागता)

**माधवः-**

सुमतिके, ननु निजजनसमीहितपूरणायैव भगवत्याः समारम्भः। यतः सत्यमेव समुत्सुकं मे [1]मनो भगवत्या दर्शनायेति।

**राधिका-**

[2]पञ्च (सच्चं) क्खु सव्वजणचित्तगदं भअवदीए।

(सत्यं खलु सर्वजनचित्तगतं भगवत्याः)

**माधवः-**

सुमतिके, समादेशय भगवती [3]सविधगामिनं मार्गम्।

**सुम०-**

(राधिकां हस्ते गृहीत्वा) इदो इदो देवो (इति परिक्रामति)

((राधिकां हस्ते गृहीत्वा) इतो इतो देव (इति परिक्रामति))

(ततः प्रविशति वकुलवेदिकोपविष्टा प्रियव्रतयोपास्यमाना साधुव्रता)

**साधु०-**

(कृष्णमवलोक्य) प्रियव्रते, पश्य-

**एष कृष्णः पुरोयाति प्रियया राधयान्वितः,**
**लवलीलतिकाश्लिष्टस्तमाल इव कोमलः।।३७।।**

---

१. ख—नेनी

२. क—कीटभक्षितः पाठः। ख—पच्च इति। अर्थानुरोधात्तु "संच्चं" इति समीचीनः प्रतिभाति।

३. ख—"वती सविधगामिनं" इत्यारभ्य " ततः प्रविशतिवकुल" इत्यन्तं नोपलभ्यते।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**प्रिय०-**

भअवदि इदो [1]विजअणंदो चंदप्पभाए सहिदो आअच्छदि।

(भगवति, इतो विजयनन्दश्चन्द्रप्रभया सहित आगच्छति)

**साधु०-**

(विलोक्य) प्रियव्रते, अद्य खलु [2]समीहितया [3]दयिततया संगतो द्विगुणतरमानन्दयति मां वत्सो विजयनन्दः।

**प्रिय०-**

एव्वं णेदं जह आणवेदि भअवदी।

(एवंन्विदं यथाज्ञापयति भगवती)

(ततः प्रविशति चन्द्रप्रभया सह विजयनन्दः)

**विज०-**

अये, एषा वकुलवेदिकोपविष्टा भगवती दृश्यते (तदुपसर्पाव इति परिक्रामतः)

**राधिका-**

(विलोक्य सहर्षम्) एसा क्खु चंदप्पभा विजअणंदसणाहा आअच्छदि।

(एषा खलु चन्द्रप्रभा विजयनन्दसनाथा आगच्छति)

**माधवः-**

(दृष्ट्वा सहर्षम्) प्रियात्प्रियतरं नः। एषा भगवती। तदुपसर्पामि (इत्युपसृत्य) भगवति, प्रणमामि।

---

१. ख–विवि।
२. ख–लमाहिताया।
३. ख–"दयि" नास्ति।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**साधु०-**

वत्स, समीहितभाजनं भूयाः।

**राधिका-**

भअवदि एसा पुत्तिआणिव्विसेसा राधिआ पणमदि।
(भगवति, एषा पुत्रिकानिर्विशेषा राधिका प्रणमति)

**साधु०-**

वत्से, सौभाग्यसमृद्धा भव।

**विज०-**

(उपसृत्य) भगवति, त्रिभुवनवन्दनीये, एषस्तवाकिञ्चित्करः किंकरः प्रणमति।

**साधु०-**

वत्स, महोत्सवभाजनं भूयाः।

**चन्द्र०-**

भअवदि एषा क्खु चंदप्पभा धम्मपुत्तिआ पणमदि।
(भगवति, एषा खलु चन्द्रप्रभा धर्मपुत्रिका प्रणमति)

**साधु०-**

वत्से, कल्याणिनी भूयाः।

(इति सर्वे यथोचितमुपविशन्ति)

**साधु०-**

वत्स माधव, राधिकावात्सल्यपरवशा किञ्चिद्वक्तुमिच्छामि।

**माधवः-**

(अञ्जलिं बद्धवा) भगवति, स्वाधीनेऽस्मिन् जने कोऽयमाज्ञाविचारः। तन्निर्विशंकमाज्ञापयतु भगवती।

**साधु०-**

**अन्तःपुरैश्चिरतरप्ररुढप्रणयैरपि।**
**राधा साधारणीं वृत्तिं नार्हतीयं सुलालिता।।३६।।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

माधवः-

भगवति, सकलहृदयज्ञायास्तव पुरतो नान्यथा ब्रवीमि-

अन्तःपुरप्रवरयोः रूक्मिणीसत्यभामयोः।
अधिकां राधिकां मन्ये प्राणेभ्योऽपि गरीयसीम्।।४०।।

साधु०-

वत्स माधव ! ब्रूहि किं ते भूयः प्रियमुपकरोमि।

माधवः-

भगवति-

देवी कोपकषायितापि गमिता राधाविवाहार्थिताम्।
यक्षापादितमोहविक्लवहृदः प्राणाश्च मे रक्षिताः।
सख्युश्चापि मनोरथः सुघटितश्चन्द्रप्रभासंगमात्।
किन्नामान्यदपेक्षितं प्रियमतो यत्प्रार्थनीयं भवेत्।।४२।।

तथापीदमस्तु। भरतवाक्यम्-

यावद्गौरीगिरीशे [1]विलसति कमला केशवोरःस्थलेऽपि,
ब्राह्मी ब्रह्मास्यकञ्जेष्वपि निगममयी यावदास्ते स्फुरन्ती।
तावद्गीर्वाणवाणी कविवरवदने भङ्गिभेदैरनन्तै-
रातन्वाना प्रमोदं सहृदयहृदये सा नरीनर्तु नित्यम्।।४२।।

(इति निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः

---

१. ख– वसति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# नाटिकाश्लोकानुक्रमणिका



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

| | | | |
|---|---|---|---|
| २९. | गीतं वा यदि वापि | १/७ | शार्दू० |
| ३०. | चक्षूरागात्प्रभृति० | ४/२८ | मन्दाक्राता |
| ३१. | चंगत्तणं ण किल | २/३ | वसन्ततिलका |
| ३२. | चन्द्रिकेव चमत्कारं | ४/१२ | अनुष्टुप् |
| ३३. | चन्द्रेण स्मितमाननं | ३/७ | शार्दू० |
| ३४. | चंदो चंदनकुच्च० | ३/२१ | शार्दू० |
| ३५. | जातस्तत्सदुपाख्य० | १/८ | शार्दू० |
| ३६. | णंच्चंदि हत्थपल्लव० | १/१३ | आर्या |
| ३७. | चित्रार्पित इव | १/२९ | आर्या |
| ३८. | तत्तादृगद्भुत० | १/२० | वसन्ततिलका |
| ३९. | तन्वंग्या वदने | ३/२० | शार्दू० |
| ४०. | त्वद्वाक्यश्रवण० | ४/१९ | शार्दू० |
| ४१. | त्वमेवं लावण्या | २/७ | शिख० |
| ४२. | तारातिशायि कुमुदाकर | १/१५ | वसन्ततिलका |
| ४३. | दर्शनं दुर्लभं तस्या | ३/११ | अनुष्टुप् |
| ४४. | दयितसमागम० | ४/२८ | आर्या |
| ४५. | दिट्ठे कन्हमुहे वहेहि | ४/५ | शार्दू० |
| ४६. | दिव्यस्रग्गन्धगन्धो | ४/२१ | स्रग्धरा |
| ४७. | दृष्टः शारदपूर्णिमासु | ३/३ | शार्दू० |
| ४८. | दूरादेत्य समुत्सुके | ४/२७ | शार्दू० |
| ४९. | देवी कोपकषायितापि | ४/४२ | अनुष्टुप् |
| ५०. | द्यौर्मूर्धा विमलो | १/१४ | शार्दू० |
| ५१. | ध्वस्तं ध्वान्तकदम्बकं | ३/२८ | शार्दू० |
| ५२. | नवदयितसमागमे | ४/२६ | पुष्पिताग्रा |
| ५३. | नानालंकृतिसत्कृतांग | १/१६ | शार्दू० |
| ५४. | निजविरहेण निशायाः | ४/३५ | आर्या |
| ५५. | निर्यान्ती शनकैरपांग० | १/२५ | शार्दू० |
| ५६. | निसर्गप्रेमपात्रे० | ३/१० | अनुष्टुप् |
| ५७. | नैषा पद्मभुवा | ३/४ | शार्दू० |
| ५८. | परन्तु वस्तुमाहात्म्यं | २/२४ | अनुष्टुप् |

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

| | | | |
|---|---|---|---|
| ५९. | पुरा पुरन्दराज्ञया | ३/२३ | पंचचामर |
| ६०. | प्रतिकृत निजविक्रियः | ४/६ | पुष्पिताग्रा |
| ६१. | प्रसादो नैवास्ये | १/१६ | शिख० |
| ६२. | प्राच्याः कर्णावत | ४/३४ | अनुष्टुप् |
| ६३. | प्रेंखत्प्रचण्डकिरणालि० | ४/१७ | वसन्ततिलका |
| ६४. | फुल्लेन्दीवरदाम० | १/२६ | शार्दू० |
| ६५. | बृद्धत्वे वृषभानुना | ४/१ | शार्दू० |
| ६६. | भाराक्रान्तवसुन्धरा० | ४/११ | शार्दू० |
| ६७. | मधुरतां मृदुतां | १/२३ | द्रुत० |
| ६८. | मनसि वचसि नेत्रे | ३/२ | मालती |
| ६९. | मनोभवोऽयमनल० | ३/२५ | अनुष्टुप् |
| ७०. | मन्दस्मितोल्लसित० | १/२७ | वसन्ततिलका |
| ७१. | मालती कुसुमस्येव | १/११ | अनुष्टुप् |
| ७२. | मुग्धे गोपवधू० | ४/२ | शार्दू० |
| ७३. | मृगमदकृतांग० | ३/१४ | आर्या |
| ७४. | यत्तत्पीतं ललितमधुरं | १/२१ | मन्दाक्रान्ता |
| ७५. | यत्पूर्वं विशदं | ३/१२ | शार्दू० |
| ७६. | यद्दन्तिदन्त परिपाण्डु० | २/२ | वसन्ततिलका |
| ७७. | यदि सुकरमिदं | २/१ | मालिनी |
| ७८. | यद्यस्ति रसरसायन० | १/६ | आर्या |
| ७९. | यत्र स्वीयमहोत्सव० | ४/८ | शार्दू० |
| ८०. | यावद् गौरीगिरिशे | ४/४३ | स्रग्धरा |
| ८१. | रामाः सन्ति न किं० | २/४ | शार्दू० |
| ८२. | रूपं तत्कथयामि० | १/३० | शार्दू० |
| ८३. | रूपं न चैतदव० | ४/१३ | वसन्ततिलका |
| ८४. | लावण्यामृतवारिधि० | ४/१० | शार्दू० |
| ८५. | वयस्यापि मनस्याधि० | ४/३२ | अनुष्टुप् |
| ८६. | वसुधा वसुधान्यधन्य० | १/१२ | मालभारिणी |
| ८७. | वामेतर कराकृष्ट० | ४/२५ | अनुष्टुप् |
| ८८. | विण्णाणं जेत्तिअं० | ३/८ | अनुष्टुप् |

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

| | | | |
|---|---|---|---|
| ८६. | विलसति सलिल० | ३/१५ | पुष्पिताग्रा |
| ९०. | विलासरंगे ललनांगके० | १/२२ | इन्द्रवज्रा |
| ९१. | विविध भूमिकया० | १/१ | द्रुतवि० |
| ९२. | वृन्दं गवाममि० | ४/७ | वसन्ततिलका |
| ९३. | वृन्दारण्यगतोऽपि | १/३ | शार्दू० |
| ९४. | शाणग्रावनिभे | ३/१७ | शार्दू० |
| ९५. | शिरोंऽशुकनिवेशनो० | १/२८ | पृथिवी |
| ९६. | शीर्यत्सन्तमसा० | ४/२६ | शार्दू० |
| ९७. | श्रृंगारमूर्तिरिव० | ३/१ | वसन्त० |
| ९८. | सजलजलदनील० | ४/६ | मालिनी |
| ९९. | सत्सम्प्रदायपरि० | १/१० | वसन्ततिलका |
| १००. | सद्वृत्तताक्रिहितां | ४/३९ | वसन्ततिलका |
| १०१. | साक्षाद्विष्णुरयं | ४/२२ | शार्दू० |
| १०२. | सातु प्रिया न सुलभा | ३/५ | वसन्त० |
| १०३. | स्नातः पद्मसुगन्धि० | ४/३६ | शार्दू० |
| १०४. | सिन्दूरामलविन्दु | ३/१६ | शार्दू० |
| १०५. | सिरिकालिदास० | १/६ | आर्या |
| १०६. | सोहइ पुण्णमिअं कं | ३/२२ | अनुष्टुप् |
| १०७. | हारहीरमणि० | ३/२७ | रथोद्धता |

● ●

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

